त्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात्,तद्वत् । एवंच सति [१]"वायुश्चान्तरिक्षश्चैतदमृतम्" इति सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥७॥

## एतेन मातरिश्वा व्याख्यातः । २ । ३ । ८ ॥

अनेनैव हेतुना मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्याता । वियन्मातरिश्वनोः पृथग्योगकरणं [२]"तेजोऽतस्तथाह्याह" इति मातरिश्वपरामर्शार्थम् ॥ ८ ॥

## असम्भवस्तु सतोऽनुपपत्तेः । २ । ३ । ९ ॥

तुशब्दोऽवधारणार्थः; असम्भवः—अनुत्पत्तिः । सतः—ब्रह्मण एव; तद्व्यतिरिक्तस्य कस्यचिदप्यनुत्पत्तिर्न सम्भवति, अनुपपत्तेः। एतदुक्तं भवति—वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम्; उत्पत्त्यसम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यत इति ॥९॥

इति श्रीशारीरकमीमांसाभाष्ये वियदधिकरणम् १ ॥

---

वेदान्तसारे—न वियदश्रुतेः॥ वियन्नोत्पद्यते, अश्रुतेः—श्रुतिः श्रवणम् । निरवयवस्य, आत्मन इवोत्पत्तिश्रवणासम्भवात् ॥ १ ॥

अस्ति तु॥ श्रवणं सम्भवत्येव—[३]"आकाशस्सम्भूतः"इत्येव हि श्रुतिः अतीन्द्रियार्थविषया वियदुत्पत्तिं प्रतिपादयति । आत्मनोऽपि [४]"न जायते" इति प्रतिषेधादनुत्पत्तिः ॥ २ ॥

गौण्यसम्भवाच्छब्दाच्च ॥ [५]"तत्तेजोऽसृजत"इति तेजःप्राथम्यवचनात्, [३]"आकाशस्सम्भूतः"इति श्रुतिः गौणी [१]"वायुश्चान्तरिक्षश्चैतदमृतम्" इति शब्दाच्च ॥ ३ ॥

---

१. बृ. ४-३-३ ॥—२. शारी. २-३-१०॥—३. तै. आन. १ ॥—४. कठ. १-२ १८ ॥—५. छा. ६-२-३ ॥

**स्याच्चैकस्य ब्रह्मशब्दवत्** ॥ एकस्य सम्भूतशब्दस्याऽकाशे गौणत्वमन्यत्र मुख्यत्वम् अनुषङ्गे सम्भवत्येव, श्रवणावृत्तिवत् । यथैकस्य ब्रह्मशब्दस्य १"तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायते" इति प्रकृतौ गौणत्वम्, २"तपसा चीयते ब्रह्म" इति मुख्यत्वमावृत्तौ ॥ ४ ॥

परिहरति—

**प्रतिज्ञाहानिरव्यतिरेकात्** ॥ ३"येनाश्रुतम्" इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अहानिः वियदादेः ब्रह्मकार्यत्वेन तदव्यतिरेकादेव ॥ ५ ॥

**शब्देभ्यः** ॥ ४"आकाशस्संभूतः" इत्यादिशब्देभ्यः अवगतां वियदुत्पत्तिं ५"तत्तेजोऽसृजत"इत्यत्राकाशशब्दावचनावगतं तेजःप्राथम्यं न निवारयितुं क्षमम् ॥ ६ ॥

**यावद्विकारं तु विभागो लोकवत्** ॥ ६"ऐतदात्म्यमिदं सर्वम्" इत्यादिना आकाशादेरपि विकारत्वावगमात्, तेजःप्रभृतिविभागवचनं सर्वस्य प्रदर्शनार्थमिति निश्चीयते । यथा च लोके 'दशेमे देवदत्तपुत्राः' इत्युक्त्वा तेषु केषाञ्चिदुत्पत्तिवचनम् ॥ ७ ॥

**एतेन मातरिश्वा व्याख्यातः** ॥ ७"तेजोऽतः" इत्यादि वक्तुं वायोः पृथगुपादानम् ॥ ८ ॥

**असम्भवस्तु सतोऽनुपपत्तेः** ॥ असम्भवस्तु परस्य ब्रह्मण एव, इतरस्य ८"सदेव" इत्यवधारणाद्यनुपपत्तेरुत्पत्तिरे ॥ ९ ॥

इति वेदान्तसारे वियदधिकरणम् ॥ १ ॥

---

**वेदान्तदीपे—न वियदश्रुतेः** ॥ वियत् उत्पद्यते नेतिसंशयः । नोत्पद्यते इति पूर्वः पक्षः, निरवयवस्य सर्वगतस्यात्मन इवोत्पत्त्यसम्भवात् । असम्भावनीयस्य श्रवणं च न सम्भवति । अत उत्पत्तिश्रुतिर्गौणीति । राद्धान्तस्तु —वियत् उत्पद्यत एव,उत्पत्तिश्रुतेः । अतीन्द्रियार्थविषयया श्रुत्याऽभिहितेऽर्थे निरवयवत्वादिहेतुकं नानुत्पत्त्यनुमानमुदेतुमलम्। आत्मनोऽप्यनुत्पत्तिश्रुतेरेव-

---

१. मु. १-१-९ ॥—२. मु. १-१-८॥—३. छा. ६-१-३॥—४. तै. आन. १॥ ५. छा. ६-२-३ ॥—६. छा. ६-८-७ ॥—७. शारी. २-३-१० ॥—८. छा. ६-२-१ ॥

नित्यत्वम्; न निरवयवत्वादिना। सूत्रार्थस्तु—नवियदश्रुतेः—वियत् नोत्पद्यते। कुतः? अश्रुतेः—अश्रवणात्; असम्भावनीयस्य श्रवणासम्भवात्॥ १॥

**अस्ति तु॥** अस्ति तु वियत उत्पत्तिः, १"आत्मन आकाशस्सम्भूतः" इति श्रुतेः; अतीन्द्रियार्थविषयया श्रुत्या प्रमाणान्तराप्रतिपन्नवियदुत्पत्तिप्रतिपादनं सम्भवत्येव। "न अग्निना सिञ्चेत्" इतिवदयोग्यमित्यर्थः॥ २॥

**गौण्यसम्भवाच्छब्दाच्च॥** २"तत्तेजोऽसृजत" इति प्रतिपन्नतेजःप्राथम्यविरोधात् मध्ये वियदुत्पत्तिर्नसम्भवतीत्युत्पत्तिश्रुतिर्गौणी, ३"वायुश्चान्तरिक्षं चैतदमृतम्" इत्यमृतत्वश्रवणाच्च॥ ३॥

**स्याच्चैकस्य ब्रह्मशब्दवत्॥** १"आकाशस्सम्भूतः आकाशाद्वायुः। वायोरग्निः" इत्यादिषु सर्वत्रानुषक्तस्यैकस्य सम्भूतशब्दस्य आकाशे गौणत्वम्, वाय्वादिषु मुख्यत्वं च; सम्भवति च ब्रह्मशब्दवत् यथैकस्य ब्रह्मशब्दस्यैकप्रकरणे श्रूयमाणस्य ४"तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इति प्रधानेगौणत्वम्, ५"तपसा चीयते ब्रह्म" इति ब्रह्मणिमुख्यत्वंच। श्रवणावृत्ताविवानुषऽङ्गेप्यभिधानावृत्तेरनुषङ्गोऽपि तत्तुल्य इत्यभिप्रायः॥ ४॥

परिहरति—

**प्रतिज्ञाऽहानिरव्यतिरेकात्॥** ६"येनाश्रुतं श्रुतम्" इति ब्रह्मविज्ञानेनाकाशादिसर्वविज्ञानप्रतिज्ञाया अहानिः आकाशस्यापि ब्रह्मण उत्पत्त्या तदव्यतिरेकादेव भवति॥ ५॥

**शब्देभ्यः॥** इतश्च ७"सदेव सोम्येदमग्र आसीत्" ८"ऐतदात्म्यमिदं सर्वम्" इत्यादिभ्यो ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणसर्वात्मकत्वादिवादिभ्यश्शब्देभ्यश्च वियदुत्पत्तिः प्रतीयते। ९"तत्तेजोऽसृजत" इत्येतस्मिन्वाक्ये आकाशोत्पत्त्यवचनात्प्रतीयमानं तेजःप्राथम्यं समानप्रकरणस्थैः प्रकरणान्तरस्थैश्च शब्दैः प्रतीयमानां वियदुत्पत्तिं न निवारयतीत्यभिप्रायः॥ ६॥

**यावद्विकारं तु विभागो लोकवत्॥** यद्यपि छान्दोग्ये १०"तत्तेजोऽसृजत" इतिवदाकाशोत्पत्तिः स्वरूपेण नाभिधीयते; तथापि तस्मिन्नेव "ऐत-

---

१. तै. आन. १॥—२. छा. ६-२-३॥—३. बृ. ४-३-३॥—४. मु. १-१-९॥—५. मु. १-१-८॥—६. छा. ६-१-३॥—७. छा. ६-२-१॥—८. छा. ६-८-७॥—९. छा. ६-२-३॥

दात्म्यमिदं सर्वम्" इत्यादिनाऽऽकाशादेस्सर्वस्य वस्तुनो ब्रह्मविकारत्ववचनात् यावद्विकारं विभागः—उत्पत्तिरुक्तैवेति गम्यते। लोकवत्—यथा लोके 'सर्व एते देवदत्तपुत्राः' इत्यभिधाय तेषां केषाञ्चिद्देवदत्तादुत्पत्तिवचनं सर्वेषां तत उत्पत्तिप्रतिपादनार्थमिति गम्यते। आकाशस्यामृतत्ववचनं सुरादिवच्चिरकालस्थायित्वविषयमित्यभिप्रायः ॥ ७ ॥

एतेन मातरिश्वा व्याख्यातः ॥ अनेनैव न्यायेन मातरिश्वनोऽप्युत्पत्तिरुक्ता। नायं न्यायातिदेशः, अधिकाशङ्काभावात्। "तेजोऽतस्तथाह्याह" इति वायोस्तेजस उत्पत्तिं वक्तुं पृथगुपादानम् ॥ ८ ॥

असम्भवस्तु सतोऽनुपपत्तेः ॥ तुशब्दोवधारणार्थः। सतः परमकारणस्य परस्यैव ब्रह्मणः असम्भवः—उत्पत्त्यसम्भवः। तद्व्यतिरिक्तस्य कृत्स्नस्यैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्यनुपपत्तेः सम्भव उक्त इत्यभिप्रायः ॥ ९ ॥

इति वेदान्तदीपे वियदधिकरणम् ॥ १ ॥

---

(श्रीशारीरकमीमांसाभाष्ये तेजोधिकरणम्॥२॥)

---

## तेजोऽतस्तथाह्याह। २। ३। १०॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम्, इदानीं व्यवहितकार्याणां किं केवलात्तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिः, आहोस्वित्तत्तद्रूपाद्ब्रह्मण इति चिन्त्यते। किं युक्तम्? केवलात्तत्तद्वस्तु न इति। कुतः? तेजस्तावत् अतः—मातरिश्वन एवोत्पद्यते। [1]"वायोरग्निः" इति ह्याह॥१०॥

## आपः। २। ३। ११॥

आपोऽपि अतः—तेजस एवोत्पद्यन्ते, [1]"अग्नेरापः" [2]"तदपोऽसृजत" इति ह्याह ॥ ११ ॥

## पृथिवी। २। ३। १२॥

---

१. तै. आन. १-अनु. २ ॥—२. छा. ६-२-३ ॥

पृथिवी अद्भ्य उत्पद्यते–[1]"अद्भ्यः पृथिवी" [2]"ता अन्नमसृजन्त" इति आह ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिव्यभिधीयते ?, अत आह–

## अधिकाररूपशब्दान्तरेभ्यः । २ । ३ । १३ ॥

महाभूतसृष्ट्यधिकारात्पृथिव्येवान्नशब्देनोक्तेति प्रतीयते । अदनीयस्य सर्वस्य पृथिवीविकारत्वात् कारणे कार्यशब्दः।तथा वाक्यशेषे भूतानां रूपसंशब्दने, [3]"यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" इत्यप्तेजसोस्सजातीयमेवान्नशब्दवाच्यं प्रतीयते। शब्दान्तरं च समानप्रकरणे[1]"अग्नेरापः अद्भ्यः पृथिवी"इति श्रूयते।अतः पृथिव्येवान्नशब्देनोच्यत इत्यद्भ्य एव पृथिवी जायते।उदाहृतास्तेजःप्रभृतयः प्रदर्शनार्थाः। महदादयोऽपि स्वानन्तरवस्तुन एवोत्पद्यन्ते, यथाश्रुत्यभ्युपगमाविरोधात्। [4]"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" [5]"तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते"[1]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"[6]"तत्तेजोऽसृजत" इत्यादयो ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्त इति ॥ १३ ॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे–

## तदभिध्यानादेव तु तल्लिङ्गात्सः । २ । ३ । १४॥

तुशब्दात्पक्षो व्यावृत्तः,महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकस्स एव पुरुषोत्तमः कारणम्,कुतः?तदभिध्यानरूपात्तल्लिङ्गात्;अभिध्यानम्–बहु स्यामिति सङ्कल्पः, [6]"तत्तेज ऐक्षत बहु स्यां प्रजायेयेति"[2]"ता आप ऐक्षन्त बह्व्यस्स्यामःप्रजायेमहि"इत्यात्मनो बहुभवनसङ्कल्परूपेक्षण-

१. तै. आन. १-अनु. २ ॥—२. छा. ६-२-४ ॥—३. छा. ६-४-१ ॥—४. मु. २-१-३ ॥—५. मु. १-१-९ ॥—६. छा. ६-२-३ ॥

श्रवणान्महदहङ्काराकाशादीनामपि कारणानां तथाविधेक्षापूर्विकैव स्व-कार्यसृष्टिरिति गम्यते, तथाविधंचेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते । श्रूयतेच सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणोऽन्तर्यामिब्राह्मणे [1]"यः पृथिव्यां तिष्ठन्" [1]"योऽप्सु तिष्ठन्" [1]"यस्तेजसि तिष्ठन्" [1]"यो वायौ तिष्ठन्" [1]"य आकाशे तिष्ठन्" इत्यादि । सुबालोपनिषदिच [2]"यस्य पृथिवी शरीरम्" इत्यारभ्य [2]"यस्याहङ्कारश्शरीरं" [2]"यस्य बुद्धिश्शरीरं" [2]"यस्याव्यक्तं शरीरम्" इत्यादि ॥

यच्चोक्तम् [3]"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादिषु श्रूयमाणा ब्रह्मणः प्राणादिसृष्टिः परम्परयाऽप्युपपद्यत इति; अत्रोच्यते—

## विपर्ययेण तु क्रमोऽत उपपद्यतेच ।२।३। १५॥

तुशब्दोऽवधारणार्थः । अव्यक्तमहदहङ्काराकाशादिक्रमाद्विपर्ययेण यस्सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रमः [3]"एतस्माज्जायते प्राणः" इत्यादिषु प्रतीयते, सच क्रमस्तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्योत्पत्तेरेवोपपद्यते। परम्परया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत। अतः [3]"एतस्माज्जायते" इत्यादिकमपि सर्वस्य ब्रह्मणः साक्षात्सम्भवस्योत्तम्भनम् ॥ १५ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ।२ । ३ । १६ ॥

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते, यदुक्तम् [3]"एतस्माज्जायते" इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्यत्वं श्राव्यते; अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिध्यानलिङ्गावगतोत्तम्भ्यत इति; तन्नोपपद्यते—क्रमविशेषपरत्वादस्य वाक्यस्य; अत्रापि सर्वेषां क्रमप-

१. बृ. ५-७ ॥ २. सुबा. ७ ॥ ३. मु. २-१-३ ॥

तीतेः। खादिषु तावत् श्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते—तैस्सहपाठलिङ्गाद्भूतप्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते। अतस्सर्वस्य साक्षाद्ब्रह्मण एव सम्भवस्योत्तम्भनमिदं वाक्यं न भवतीति चेत्—तन्न, अविशेषात्[1] "एतस्माज्जायते प्राणः" इत्यनेनाविशेषात्। विज्ञानमनसोः खादीनांच[1] "एतस्माज्जायते" इत्यनेन साक्षात्सम्भवरूपसम्बन्धस्याभिधेयस्य सर्वेषां प्राणादिपृथिव्यन्तानामविशिष्टत्वात्स एव विधेयः, न क्रमः। श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम्, [2] "पृथिव्यप्सु प्रलीयते" इत्यारभ्य "तमः.... एकीभवति" इत्यन्तेन क्रमान्तरप्रतीतेः। अतोऽव्यक्तादिशरीरकात्परस्माद्ब्रह्मण एव सर्वकार्याणामुत्पत्तिः। तेजःप्रभृतयश्च शब्दास्तदात्मभूतं ब्रह्मैवाभिदधति ॥ १६ ॥

नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैश्शब्दैः तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्ध उपरुध्येत ; तत्राह—

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोभाक्तस्तद्भाव-भावित्वात् । २ । ३ । १७ ॥

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः, निखिलजङ्गमस्थावरव्यपाश्रयस्तत्तच्छब्दव्यपदेशः भाक्तः—वाच्यैकदेशे भज्यत इत्यर्थः; समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वाद्वेदान्तश्रवणात्प्राक्प्रकार्यप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्यवसानस्य, लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे तेते शब्दाः भङ्क्त्वाभङ्क्त्वा व्यपदिश्यन्ते। अथवा तेजःप्रभृतिभिश्शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तस्स्यात्—अमुख्यस्स्यादित्याशङ्क्य—चराचरव्यपाश्रयस्तु—इत्युच्यते। चराचरव्यपाश्रयः तद्व्यपदेशः—तद्वाचिशब्दः, चराचरवाचिश-

१. मु. २-१-३ ॥—२. सुबा. २-ख ॥

ब्दो ब्रह्मण्यभाक्तः मुख्य एव; कुतः?, ब्रह्मभावभावित्वात्सर्वशब्दानां वाचकभावस्य; नामरूपव्याकरणश्रुत्या हि तथाऽवगतम् ॥ १७ ॥

इति श्रीशारीरकमीमांसाभाष्ये तेजोधिकरणम् ॥ २ ॥

---

वेदान्तसारे—तेजोऽतस्तथाह्याह ॥ तेजः वायोरेवोत्पद्यते; न साक्षाद्ब्रह्मणः, [1]"वायोरग्निः" इति आह ॥ १० ॥

आपः ॥ [1]"अग्नेरापः" इति श्रुतेः आपः अग्नेः ॥ ११ ॥

पृथिवी ॥ पृथिवी अद्भ्यः, [1]"अद्भ्यः पृथिवी" इति श्रुतेः ॥ १२ ॥

अधिकाररूपशब्दान्तरेभ्यः ॥ [2]"ता अन्नमसृजन्त" इत्यन्नशब्देन पृथिव्येवाभिधीयते, महाभूतसृष्ट्यधिकारात् । [3]"यत्कृष्णं तदन्नस्य" इति पृथिवीरूपविधानात्, [1]"अद्भ्यः पृथिवी" इति पृथिवीशब्दाभिधानाच्च ॥ १३ ॥

राद्धान्तमाह—

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ [4]"तत्तेज ऐक्षत" [4]"ता आप ऐक्षन्त" इति तदभिध्यानरूपात्, [4]"तदैक्षत बहु स्याम्" इत्येतत्स्वरूपात् परमात्मकारणत्वलिङ्गात् स एव परमात्मा तेजःप्रभृतिशरीरकस्तत्तच्छब्दैस्साक्षात्कारणत्वेनाभिधीयते ॥ १४ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ पारम्पर्यक्रमात् विपर्ययेण [5]"एतस्माज्जायते प्राणः खं वायुर्ज्योतिरापः" इत्यादिवाक्यात् यस्साक्षाद्ब्रह्मणस्सृष्टिरुपक्रमः, सोऽपि अतः तेजःप्रभृतिशरीरकब्रह्मण एव सृष्टेः उपपद्यते ॥ १५ ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ भूतप्राणयोरन्तराले इन्द्रियग्राममनसी क्रमेण उत्पद्येते इत्येतत्परमिदं वाक्यं [5]"खं वायुर्ज्योतिरापः" इत्यादिश्रुतिप्रत्यभिज्ञानरूपात् लिङ्गात्; अत इदमपि पारंपर्यक्रमपरमितिचेन्न, [5]"एतस्माज्जायते" इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात् । अतस्तेजःप्रभृतीनामपि साक्षात्परमात्मैव कारणम् ॥

[4]"तत्तेज ऐक्षत" इति तेजःप्रभृतिशब्दाः लोके तत्तद्वस्तुवाचिनः ब्रह्मणि भाक्ता इत्यत्राह—

---

१. तै. आन. १-२ ॥—२. छा. ६-२-४ ॥—३. छा. ६-४-१ ॥—४. छा. ६-२-३ ॥—५. मु. २-१-३ ॥

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ चराचरवस्तुसम्बन्धितत्तद्वाचकशब्दः ब्रह्मणि अभाक्तः मुख्य एव, [1]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति तु सर्वस्य वस्तुनो नामरूपभाक्त्वस्यात्मतया ब्रह्मानुप्रवेशभावभावित्वात् । लौकिकास्त्वेवमजानन्तो वाच्यैकदेशे प्रयुञ्जते ॥ १७ ॥

इति वेदान्तसारे तेजोधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—तेजोऽतस्तथाह्याह ॥ [2]"आकाशाद्वायुः" इत्यादिव्यवहितकार्याणि किं स्वानन्तरादाकाशादेः केवलादुत्पद्यन्ते, उत तत्तच्छरीरात्परस्माद्ब्रह्मण इति संशयः। स्वानन्तरादेवेति पूर्वःपक्षः—[2]"आकाशाद्वायुः वायोरग्निः" इति तस्मात्केवलादेवोत्पत्तिश्रवणात् । [3]"एतस्माज्जायते प्राणः" इति परस्माद्ब्रह्मणस्सर्वस्योत्पत्तिवादः, परम्परयाप्युपपद्यते। राद्धान्तस्तु—[4]"तत्तेज ऐक्षत बहु स्याम्"[5]"ता आप ऐक्षन्त" इति बहुभवनसङ्कल्पपूर्वकसृष्ट्युपदेशात्।केवलस्य त्वीदृशसङ्कल्पानुपपत्तेः, [6]"यस्तेजसि तिष्ठन् यस्य तेजश्शरीरम् ...यस्याकाशश्शरीरम्" इति सर्वेषां परब्रह्मशरीरत्वश्रवणाच्च तत्तच्छब्दवाच्यात्परस्माद्ब्रह्मण एव साक्षात्तेजःप्रभृतीनामपि सृष्टिः । सूत्रार्थस्तु—तेजोऽतस्तथाह्याह—अतः वायोरेव केवलादुत्पद्यते तेजः;तथाह्याह श्रुतिः—[2]"वायोरग्निः" इति ॥ १० ॥

आपः ॥ 'अतस्तथाह्याह'इत्यनुवर्तते,अतः तेजस एव केवलात् आपः उत्पद्यन्ते, [2]"अग्नेरापः" [4]"तदपोऽसृजत" इति ह्याह ॥ ११ ॥

पृथिवी॥ एवं पृथिव्यपि उत्पद्यते, [2]"अद्भ्यःपृथिवी"[5]"ता अन्नमसृजन्त" इति ह्याह ॥ १२ ॥

अन्नशब्देन कथं पृथिव्यभिधीयत इत्यवगम्यते ; तत्राह—

अधिकाररूपशब्दान्तरेभ्यः ॥ अन्नशब्देन पृथिव्युच्यते , महाभूतसृष्ट्यधिकारात्, पश्चादपि महाभूतरूपसङ्कीर्तने[7]"यत्कृष्णं तदन्नस्य"इति रूपकीर्तनात्, समानप्रकरणे [2]"अद्भ्यः पृथिवी" इति पृथिवीशब्दश्रवणाच्च॥१३॥

---

१. छा. ६-३-२ ॥—२. तै. आन. १-२ ॥—३. मु. २-१-३ ॥—४. ५. छा. ६-२-३,४ ॥—६. बृ. ५-७-१४ ॥—७. छा. ६-४-१ ॥

तदभिध्यानादेवतु तल्लिङ्गात्सः॥ तुशब्दः पक्षव्यावृत्त्यर्थः। न तेजः-प्रभृतयः केवलाः स्वानन्तराणां कारणानि; अपि तु तत्तच्छरीरः सः परमात्मैव तेषां कारणम्; कुतः? परमात्मसृष्टिलिङ्गात् तथाविधाभिध्यानात्। यथैवहि१"तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" इति तथैव१"तत्तेज ऐक्षत बहुस्यां प्रजायेय" इति बहुभवनसङ्कल्परूपाभिध्यानं दृश्यते। ईदृशमभिध्यानं परमात्मन एव हि सम्भवति॥ १४॥

विपर्ययेण तु क्रमोऽत उपपद्यते च॥२"आकाशाद्वायुः वायोरग्निः" इति पारम्पर्यक्रमात् विपर्ययेण३"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच।खं वायुर्ज्योतिरापः पृथिवी"इति सर्वेषां ब्रह्मानन्तर्यरूपो यः क्रमः, सचातएव तत्तच्छरीराद्ब्रह्मणस्सृष्टेः उपपद्यते॥ १५॥

अन्तरा विज्ञानमनसी क्रमेणतल्लिङ्गादितिचेन्नाविशेषात्॥ विज्ञान-साधनत्वादिन्द्रियाणि प्राणश्च विज्ञानमित्युच्यन्ते। ३"एतस्माज्जायते प्राणः"इत्येतद्वाक्यम् आकाशतन्मात्रपञ्चकयोरन्तराले विज्ञानमनसी क्रमेण उत्पद्येते इत्येतत्परम्।विज्ञानमनसी इति प्राणस्यापि प्रदर्शनार्थम्, ४"पृथिव्यप्सु प्रलीयते"इत्यारभ्य ४"वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते"इति प्रलयक्रमप्रत्यभिज्ञानात् तल्लिङ्गात्।अतो न श्रुत्यन्तरविरुद्धत्वात्साक्षाद्ब्रह्मणस्सर्वेषां सृष्टिपरमिदं वाक्यम्।अपि तु श्रुत्यन्तर-सिद्धपारम्पर्यक्रमपरमिति चेत्—परिहरति-नाविशेषात् - भूततन्मात्रान्तराले विज्ञानमनसोरुत्पत्तावपि तत्तच्छरीरकब्रह्माभिधायित्वाद्भूतेन्द्रियमनः प्राण-शब्दानां सर्वेषां साक्षादुत्पत्त्यविशेषात् तत्परमेवेदं वाक्यम्॥ १६॥

लोके तत्तद्वस्तुवाचितया शब्दजातस्य ब्रह्मणि वृत्तिरमुख्येत्याशङ्क्याह-

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्॥तु-शब्दश्शङ्कानिवृत्त्यर्थः;स्थावरजङ्गमवस्तुव्यपाश्रयः तद्व्यपदेशः तद्वाचिशब्दो ब्रह्मणि अभाक्तः मुख्यएव,कुतः?तद्भावभावित्वात्—तेजः प्रभृतिषु आत्मतया ब्रह्मभावभावित्वेन सर्वस्य वस्तुनस्तच्छरीरतया तत्प्रकारत्वात् तत्तद्वाचिनां शब्दानां तत्रैव पर्यवसानात्।प्रकारवाचिनां शब्दानां प्रकारिपर्यवसायित्वेनाभाक्त-

---

१. छा. ६-२-३॥—२. तै. आन. १-२—॥ ३. मु.२-१-३॥—४. सुबा. २-ख॥

एवं गवादिशब्देषु सिद्धम् ॥ १७ ॥

इति वेदान्तदीपे तेजोधिकरणम् ॥ २ ॥

( श्रीशारीरकमीमांसाभाष्ये आत्माधिकरणम् ॥ ३ ॥ )

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः। २ । ३ । १८ ॥

वियदादेः कृत्स्नस्य परस्माद्ब्रह्मण उत्पत्तिरुक्ता। इदानीं जीवस्याप्युत्पत्तिरस्ति नेति संशय्यते; किं युक्तम्? अस्तीति, कुतः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः, प्राक्सृष्टेरेकत्वावधारणाच्च। वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति-[१]"यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्"[२]"प्रजापतिः प्रजा असृजत"[३]"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" [४]"यतो वा इमानि भूतानि जायन्ते"इति। एवं सचेतनस्य जगत उत्पत्तिवचनात् जीवस्याप्युत्पत्तिः प्रतीयते। नच वाच्यं-ब्रह्मणो नित्यत्वात् तत्त्वमस्यादिभिश्च जीवस्य ब्रह्मत्वावगमाज्जीवस्य नित्यत्वम्-इति [५]"ऐतदात्म्यमिदं सर्वम्" [६]"सर्वं खल्विदं ब्रह्म"इत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात्तस्यापि नित्यत्वप्रसक्तेः। अतो जीवोपि वियदादिवदुत्पद्यत इति ॥

(सिद्धान्तः)

एवं प्राप्तेऽभिधीयते-नात्मा श्रुतेः-इति। नात्मोत्पद्यते; कुतः? श्रुतेः[७]"न जायते म्रियते वा विपश्चित्"[८]"ज्ञाज्ञौ द्वावजौ"इत्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते। आत्मनो नित्यत्वं च ताभ्यः-श्रुतिभ्य एवागम्यते[९]"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"[७]"अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिभ्यः। अतश्च

१. तै. अम्भ. १-१ ॥—२. यजु. २-अष्ट॥—३. छा. ६-८-४॥—४. तै. आन. ॥—५. छा. ६-८-७ ॥—६. छा. ३-१४-१ ॥—७. कठ. २-१८॥—८. श्वे. १-९ ॥—९. श्वे. ६-१३॥

नात्मोत्पद्यते। कथं तर्ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते;इत्थमुपपद्यते—जीवस्यापि कार्यत्वात्कार्यकारणयोरनन्यत्वाच्च । एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात्; नेत्युच्यते-कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः, तज्जीवस्याप्यस्त्येव । इयांस्तु विशेषः वियदादेरचेतनस्य यादृशोऽन्यथाभावो न तादृशो जीवस्य ज्ञानसङ्कोचविकासलक्षणो जीवस्यान्यथाभावः; वियदादेस्तु स्वरूपान्यथाभावलक्षणः । सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते । एतदुक्तं भवति—भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यतां च प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं, भोक्तृगतं चापुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य तस्य नित्यत्वं, निरवद्यत्वं, सर्वदा सर्वज्ञत्वं, सत्यसङ्कल्पत्वं, करणाधिपाधिपत्वं, विश्वस्य पतित्वं, च प्रतिपाद्य सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं, तस्य चात्मत्वम्, प्रतिपादितम्; अतस्सर्वदा चिदचिद्वस्तुतया तत्प्रकारं ब्रह्म; तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति; तत्कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम्; तच्च कार्यावस्थम् । तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति । चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति; कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया [1]"येनाश्रुतं श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो [2]"यथा

---

१, २. छा. ६-१ ३, ४॥

सोम्यैकेन" इत्यादिना निदर्शितः। ईदृशज्ञानसङ्कोचविकासकरतत्तद्देह-सम्बन्धवियोगाभिप्रायाः जीवस्योत्पत्तिमरणवादिन्यः,[१]"प्रजापतिः प्रजा असृजत" इत्याद्याः श्रुतयः। अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च [२]"न जायते म्रियते" इत्याद्याः, [३]"नित्यो नित्यानाम्" इत्याद्याश्च श्रुतयः। स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः [४]"सवा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म" [३]"नित्यो नित्यानाम्" इत्याद्याः परविषयाः श्रुतयः। एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते।[५]"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इतिहि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे वदति—इति। ये त्वविद्योपाधिकं जीवत्वंवदन्ति, येच पारमार्थिकोपाधिकृतम्, येच सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधाऽवस्थितं वदन्ति; सर्वेऽप्येते अविद्याशक्तेरुपाधिशक्तेर्भोक्तृभोग्यनियन्तृशक्तीनां च प्रलयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं नामरूपविभागाभावादेवोपपादयन्ति। [६]"वैषम्यनैर्घृण्ये न सापेक्षत्वात्"[७]"न कर्माविभागादितिचेन्नानादित्वादुपपद्यते चाप्युपलभ्यतेच" इति सूत्राभ्यां जीवभेदस्य तत्कर्मप्रवाहस्यचानादित्वाभ्युपगमाच्च। इयान्विशेषः—एकस्यानाद्यविद्यया ब्रह्म स्वयमेव मुह्यति, अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्मस्वरूपमेव बध्यते, उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। अपरस्य ब्रह्मैव विचित्राकारेण परिणमते, कर्मफलानिचानिष्टानि भुङ्क्ते; नियन्त्रंशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात्स्वस्मादभिन्नं भोक्तारमनुसंदधातीति स्वयमेव भुङ्क्ते; अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्य-

१. यजु. अष्ट. २॥—२. कठ. २-१८॥—३. श्वे. ६-१३॥—४. बृ. ६-४-२५॥—५. बृ. ३-४-७॥—६, ७. शारी. २-१-३४, ३५॥

कारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरमवतिष्ठते। प्रकारभूतचिदचिद्वस्तुगताः अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसम् ॥ १८ ॥

इति श्रीशारीरकमीमांसाभाष्ये आत्माधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः॥ नात्मा उत्पद्यते, [1]"न जायते म्रियते" इति श्रुतेः; [2]"नित्यो नित्यानाम्" इत्यादिश्रुतिभ्यो नित्यत्वावगतेश्च ॥ १८ ॥

इति वेदान्तसारे आत्माधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः॥ किमात्मोत्पद्यते, न वेति संशयः। उत्पद्यत इति पूर्वः पक्षः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादेः, [3]"तोयेन जीवान्व्यससर्ज भूम्याम्" [4]"प्रजापतिः प्रजा असृजत" इत्यादिसृष्टिवचनाच्च नित्यादिश्रुतिराकाशाद्यमृतत्ववचनवन्नेया। राद्धान्तस्तु—नात्मोत्पद्यते, अनुत्पत्तिश्रुतेः; [1]"न जायते म्रियते वा विपश्चित्"इति जीवोत्पत्तिर्निषिध्यते; [1]"अजो नित्यः"[2]"नित्यो नित्यानाम्"इत्यादिश्रुतिभ्यो नित्यत्वावगमात्। जीवोत्पत्तिपक्षे अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गात्, वैषम्यनैर्घृण्यप्रसङ्गाच्च। जीवस्य सृष्टिवचनं भोक्तृत्वानुगुणज्ञानविकासाभिप्रायम्। प्राक्सृष्टेरेकत्वावधारणादविभागवचनं नामरूपविभागाभावाभिप्रायम्। सूत्रमपि व्याख्यातम् ॥ १८ ॥

इति वेदान्तदीपे आत्माधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये ज्ञाधिकरणम् ॥ ४ ॥ )

---

## ज्ञोऽत एव । २। ३। १९॥

वियदादिवज्जीवो नोत्पद्यत इत्युक्तम्, तत्प्रसङ्गेन जीवस्वरूपं नि-

---

१. कठ. २-१८ ॥—२. श्वे, ६-१३ ॥—३. तै. अम्म. १-१ ॥—४. यजु. २. अष्ट॥

रूप्यते । किं सुगतकपिलाभिमतचिन्मात्रमेवात्मनस्स्वरूपम्; उत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वभावमेवागन्तुकचैतन्यगुणकम्; अथ ज्ञातृत्वमेवास्य स्वरूपमिति । किंयुक्तम्? चिन्मात्रमिति; कुतः तथा श्रुतेः । अन्तर्यामिब्राह्मणेहि [१]"य आत्मनि तिष्ठन्" इति माध्यन्दिनीयपर्यायस्य स्थाने [१]"यो विज्ञाने तिष्ठन्" इति काण्वा अधीयते । तथा [२]"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपिच"इति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते। स्मृतिषु च [३]"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते । अपरस्तु–जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्,करणानां च वैयर्थ्यात्,सुषुप्तिमूर्च्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रतस्सामग्र्यां सत्यां ज्ञानोत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपम्; नापि ज्ञातृत्वम्;आगन्तुकमेव चैतन्यम्; सर्वगतत्वं चात्मनोऽवश्याभ्युपेत्यम्, सर्वत्र कार्योपलब्धेः सर्वत्रात्मनस्सन्निधानाभ्युपगमाच्छरीरगमनेनैव कार्यसम्भवे सति गतिकल्पनायां प्रमाणाभावाच्च । श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति—[४]"नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि" इति। तथा मोक्षदशायां ज्ञानाभावं दर्शयति–[५]"न प्रेत्य संज्ञाऽस्ति" इति। [३]"ज्ञानस्वरूपम्"इत्यादिप्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इति ॥

एवं प्राप्ते प्रचक्ष्महे–ज्ञोऽत एव-ज्ञ एव–अयमात्मा ज्ञातृत्वस्वरूप एव, न ज्ञानमात्रम्,नापि जडस्वरूपः; कुतः? अत एव–श्रुतेरेवेतत्यर्थः। "नात्मा श्रुतेः"इति प्रकृता श्रुतिः अतइति शब्देन परामृश्यते। तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने [१]"अथ यो वेदेदं जिघ्राणीति

१. बृ. ५-७-२२ ।।—२. तै. आन. ५-१ ।।— ३. वि. पु. १-अं. २-अ, ६-श्लो।। —४. छा. ८-११-२ ।।—५. बृ. ६-५-१३ ।।

स आत्मा"[१]"मनसैवैतान् कामान् पश्यन्नमते य एते ब्रह्मलोके"[२]"सत्यकामस्सत्यसङ्कल्पः"[३]"नोपजनं स्मरन्निदं शरीरम्" अन्यत्रापि[४]"न पश्यो मृत्युं पश्यति" तथा वाजसनेयके[५]"कतम आत्मा" इति पृ। [६]"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"इति तथा[७]"विज्ञातारमरे केन विजानीयात्"[८]"जानात्येवायं पुरुषः" तथा[९]"एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"[१०]"एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः" इति ॥ १९ ॥

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वलोपलब्धिः प्रसज्यत इति; तत्रोच्यते—

## उत्क्रान्तिगत्यागतीनाम् ।२। ३ ।२०॥

नायं सर्वगतः, अपित्वणुरेवायमात्मा ; कुतः? उत्क्रान्तिगत्यागतीनां श्रुतेः; उत्क्रान्तिस्तावच्छ्रूयते[११]"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः"इति। गतिरपि[१२]"ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति। आगतिरपि[१३]"तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति। विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् ॥ २० ॥

## स्वात्मना चोत्तरयोः ।२।३।२१॥

चशब्दोऽवधारणे। यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः स्थितस्याप्यात्मनः कथंचिदुपपद्यते; गत्यागती तु न कथंचिदुपपद्येते। अत-

---

१. छा. ८-१२-४॥—२. छा. ८-७-१ ॥—३. छा. ८-१२-३॥—४. छा. ७-२६-२॥—५, ६. बृ. ६-३-७॥— ७. बृ. ६-५-१५॥—८॥—९. प्रश्न.४-९॥ —१०. प्रश्न. ६-५॥—११. बृ. ६-४-२॥—१२. कौषी. १-२॥— १३. बृ. ६-४-६॥

स्ते स्वात्मनैव सम्पाद्ये॥ २१ ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्॥२।३।२२॥

[१]"योऽयं विज्ञानमयः प्राणेषु" इति जीवं प्रस्तुत्य [२]"स वा एष महानज आत्मा" इति महत्त्वश्रुतेः नाणुर्जीव इति चेन्न; इतराधिकारात्–जीवादितरस्य प्राज्ञस्य तत्राधिकारात्; यद्यप्युपक्रमे जीवः प्रस्तुतः, तथापि [३]"यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति मध्ये परः प्रतिपाद्यत इति तत्सम्बन्धीदं महत्त्वम्; न जीवस्य ॥ २२ ॥

## स्वशब्दोन्मानाभ्यां च । २ । ३ । २३ ॥

साक्षादणुशब्द एव श्रूयते [४]"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति; उद्धृत्य मानमुन्मानम्; अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते [५]"वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयः" इति; [६]"आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति च। अतोऽणुरेवायमात्मा ॥ २३ ॥

अथ स्यात्–आत्मनोऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति; तत्र मतान्तरेण परिहारमाह—

## अविरोधश्चन्दनवत्॥ २। ३। २४॥

यथा हरिचन्दनबिन्दुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति, तद्वदात्माऽपि देहैकदेशवर्ती सकलदेशवर्तिनीं वेदनामनुभवति॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि । २।३।२५॥

---

१. बृ. ६-३-७ ॥—२. बृ ६-४-२५॥—३. बृ. ६-४-१३॥—४. मु. ३-१-९॥—५. श्वे. ५-९ ॥—६. श्वे. ५-८ ॥

हरिचन्दनबिन्द्वादेर्देहदेशविशेषवास्थितिविशेषात्तथाभावः, आत्मनस्तु तन्न विद्यत इति चेन्न;आत्मनोऽपि देहदेशविशेषे स्थित्यभ्युपगमात्; हृदयदेशे ह्यात्मनः स्थितिः श्रूयते [१]"हृदि ह्ययमात्मा तत्रैकशतं नाडीनाम्" इति; तथा [२]"कतम आत्मा" इति प्रकृत्य [२]"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति। आत्मनो देशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः; न तु चन्दनस्य देशविशेषापेक्षा ॥ २५ ॥

एकदेशवर्तिनस्सकलदेहव्यापिकार्यकरत्वप्रकारं स्वमतेनाह—

## गुणाद्वाऽऽलोकवत् ।२ । ३।२६॥

वाशब्दो मतान्तरव्यावृत्त्यर्थः; आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः; आलोकवत्—यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते,तद्वद्धृदयस्थस्याऽऽत्मनो ज्ञानं सकलदेहं व्याप्य वर्तते ; ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति प्रथमसूत्रे स्थापितम् ॥ २६ ॥

ननूक्तं ज्ञानमात्रमेवात्मेति ; तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यते ; तत्राह—

## व्यतिरेको गन्धवत्तथा च दर्शयति।२।३।२७॥

यथा पृथिव्याः गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः, तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्याऽऽत्मनो व्यतिरेकस्सिद्धः; दर्शयति च श्रुतिः [३]"जानात्येवायं पुरुषः" इति ॥ २७ ॥

## पृथगुपदेशात् ।२।३।२८॥

स्वशब्देनैव विज्ञानं विज्ञातुः पृथगुपदिश्यते [४]"नहि विज्ञातुर्विज्ञाते-

१. प्रश्न. ३-६ ॥—२. बृ. ६-३-७ ॥—३ ॥—४. बृ. ६-३-३० ॥

र्विपरिलोपो विद्यते" इति ॥ २८ ॥

यत्तूक्तं[१] "यो विज्ञाने तिष्ठन्"[२] "विज्ञानं यज्ञं तनुते"[३] "ज्ञानस्वरूपमत्यन्तनिर्मलम्" इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति, तत्राह—

## तद्गुणसारत्वात्त तद्व्यपदेशः प्राज्ञवत्॥२।३।२९॥

तुशब्दश्चोद्यं व्यावर्तयति; तद्गुणसारत्वात्– विज्ञानगुणसारत्वात् आत्मनो विज्ञानमिति व्यपदेशः । विज्ञानमेवास्य सारभूतो गुणः, यथा प्राज्ञस्यानन्दस्सारभूतो गुण इति प्राज्ञ आनन्दशब्देन व्यपदिश्यते–[४]"यदेष आकाश आनन्दो न स्यात्" [५]"आनन्दो ब्रह्मेति व्यजानात्" इति; प्राज्ञस्य ह्यानन्दस्सारभूतो गुणः–[६]"स एको ब्रह्मण आनन्दः"[७]"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति। यथावा [८]"सत्यं ज्ञानमनन्तं ब्रह्म"इति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः;[८]"सह ब्रह्मणा विपश्चिता" [९]"यस्सर्वज्ञः" इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्॥२।३।३०॥

विज्ञानस्य यावदात्मभाविधर्मत्वात्तेन तद्व्यपदेशो न दोषः; तथाच खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति व्यपदिश्यमाना दृश्यन्ते; स्वरूपनिरूपणधर्मत्वादित्यर्थः। चकारात् ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन विज्ञानमिति व्यपदेशो न दोष इति समुच्चिनोति ॥ ३० ॥

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावात् ज्ञानस्य न स्वरूपानुबन्धिधर्मत्वमिति, तत्राह—

---

१. बृ. ५-७-२२ ॥—२. तै. आन. ५-१ ॥—३. वि. पु. १-२-६ ॥—४. तै. आन. ७-१ ॥—५. तै. भृ. ६-१ ॥—६. तै. आन. ८-४ ॥—७. तै. आन. ९-१ ॥ —८. तै. आन. १-१, २ ॥—९. मु. १-१-९ ॥

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्।२।३।३१

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः। अस्य-ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादिष्वभिव्यक्तिसम्भवात्स्वरूपानुबन्धिधर्मत्वोपपत्तिः ; पुंस्त्वादिवत्—यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति। सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि— [1]"तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्"इति शरीरस्वरूपव्यपदेशात्। सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम् । तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते;एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः । अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम्, स चायमात्माऽणुपरिमाणः- [2]"न प्रेत्य संज्ञाऽस्ति"इत्यपि न मुक्तस्य ज्ञानाभाव उच्यते; अपि तु [2]"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति"इति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनम्, तन्मुक्तस्य न विद्यते— [3]"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् सर्वं ह पश्यः पश्यतिसर्वमाप्नोति सर्वशः" [4]"नोपजनं स्मरन्निदं शरीरम्" [5]"मनसैतान् कामान् पश्यन्रमते" इत्यादिश्रुत्यैकार्थ्यात् ॥ ३१ ॥

सम्प्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा । २ । ३ । ३२ ॥

अन्यथा सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम् ; अन्यतरनियमो वा—उपलब्धिरेव वा नित्यं स्यात्, अनुपलब्धिरेव वा; एतदुक्तं भवति—लोके तावद्वर्तमानयोरा-

१॥—२. बृ. ४-४-१२ ॥—३. छा. ७-२६-२॥—४. छा. ८-१२-३॥—५. छा. ८-१२-५ ॥

त्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुस्स्यात्; उपलब्धेरेव वा, अनुपलब्धेरेव वा; उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत; यद्युपलब्धेरेव, सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात्। अथानुपलब्धेरेव, सर्वदा सर्वत्रोपलब्धिर्न स्यात्—इति। अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः। करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैस्सर्वदा संयुक्तत्वाददृष्टादेरप्यनियमादुक्तदोषस्समानः ॥ ३२ ॥

इति श्रीशारीरकमीमांसाभाष्ये ज्ञाधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—ज्ञोऽतएव ॥ [1]"अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान् पश्यन्रमते" [2]"य एते ब्रह्मलोके" इत्यादिश्रुतेः बद्धो मुक्त श्चात्मा ज्ञातैव [2]"मनोऽस्य दैवं चक्षुः" इति श्रुतेः स्वधर्मभूतं ज्ञानं मनः ॥१९॥

उत्क्रान्तिगत्यागतीनाम् ॥ उत्क्रान्तिगत्यागतीनां श्रुतेरणुर्जीवः ॥२०॥

स्वात्मना चोत्तरयोः ॥ गत्यागत्योस्स्वात्मनैव संपाद्यत्वादप्यणुत्वं निश्चितम् ॥ २१ ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ [3]"स वा एष महानज आत्मा" इति श्रुतेः नाणुः इतिचेत्— न [4]"यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति परमात्माधिकारात् ॥ २२ ॥

स्वशब्दोन्मानाभ्याञ्च ॥ [5]"एषोऽणुरात्मा" इत्यणुशब्दात् [6]"आराग्रमात्रो ह्यवरः" इत्युद्धृत्य उन्मानशब्दाच्चाणुः ॥ २३ ॥

अणोरपि सकलदेहव्यापिवेदनानुभवे अन्यमते न हेतुमाह—

अविरोधश्चन्दनवत् ॥ यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापि सुखं जनयति, तद्वदविरोधः ॥ २४ ॥

अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदि हि ॥ देशविशेषस्थितेश्च-

---

१. छा. ८-१२-४॥—२. छा. ८-१२-५॥—३. बृ. ६-४-२४॥—४. बृ. ६-४-१३॥—५. मु. ३-१-९॥—६. श्वे. ५-८॥

न्दनस्येतिचेत्—न, आत्मनोऽपि तदभ्युपगमात्; १"हृदि ह्ययमात्मा" २"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति श्रुतेः ॥ २५ ॥

स्वमतेनाह—

गुणाद्वालोकवत् ॥ आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यानुभवति, यथा मणिप्रभृतयस्स्वकीयेनालोकेन सकलदेशं व्याप्य प्रकाशयन्ति ३"प्रज्ञामात्रास्वर्पिताः" इति श्रुतेः ॥ २६ ॥

न ज्ञानात्मनोः व्यतिरेक इत्यत्राह—

व्यतिरेको गन्धवत्तथाच दर्शयति ॥ "गन्धवती पृथिवी" इतिवत् "अहं जानामि" इति गुणत्वेनोपलब्धेःव्यतिरेकोऽस्ति, दर्शयति च श्रुतिर्व्यतिरेकं—४"जानात्येवायं पुरुषः" इति ॥ २७ ॥

पृथगुपदेशात् ॥ आत्मनः पृथक्त्वेन चोपदिश्यते५"नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति ॥ २८ ॥

२"योऽयं विज्ञानमयः" इति ज्ञानमात्रव्यपदेशः कथमित्यत्राह—

तद्गुणसारत्वात्त तद्व्यपदेशः प्राज्ञवत् ॥ ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः, यथा प्राज्ञस्य विपश्चितोऽपि ६"सत्यं ज्ञानम्" इति ॥२९॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ आत्मस्वरूपानुबन्धित्वात् ज्ञानस्य तेन व्यपदेशे न दोषः; स्वरूपानुबन्धिधर्मत्वेन गोत्वादीनां खण्डादेः गौरित्यादिव्यपदेशो हि दृश्यते ॥ ३० ॥

सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत्राह—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरादावभिव्यक्तिसम्भवात्, स्वरूपानुबन्ध्येव ज्ञानम्; यथा पुंस्त्वासाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः; जीवात्मनो ज्ञातृत्वमणुत्वञ्चोक्तम् ॥ ३१ ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ज्ञप्ति-

---

१. प्रश्न. ३-६ ॥—२. बृ. ६-३-७ ॥—३. कौषी. ३-९ ॥—४॥—५. बृ. ६-३-३० ॥—६. तै. आन. १-१॥

मात्रसर्वगतात्मवादे तावन्नित्यवत्सर्वदोपलब्धिस्स्यात् ; सङ्कोचकाभावा- द्विद्यमानाया अनुपलब्धेरपि सैव हेतुरिति साऽपि नित्यवत्स्यात्, ज्ञाने विद्य- मानेऽपि हेत्वन्तरेण निवारणासम्भवात्। आगन्तुकज्ञानसर्वगतात्मवादेऽपि स एव दोषः; सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूनां मनस्संयोगादीनां सर्वसाधारण- त्वात्। अदृष्टहेतूनामपि सर्वसाधारणत्वात् तेनापि न नियमः, अथोपलब्ध्यनुप- लब्ध्योर्विरोधादुपलब्धेर्वैते हेतवः स्युः; अनुपलब्धेर्वा ; तथा सत्यन्यतरनिय- मस्स्यात् ॥ ३२ ॥

इति वेदान्तसारे ज्ञाधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—ज्ञोऽत एव ॥ किं जीवः चैतन्यमात्रवपुः ? उत जडस्व- रूप एवागन्तुकचैतन्यगुणः; अथ ज्ञातृत्वैकस्वरूप इति संशयः । चैतन्यमात्र- वपुरिति प्रथमः पक्षः।[१]"विज्ञानं यज्ञं तनुते" [२]"यो विज्ञाने तिष्ठन्"[३]"ज्ञानस्व- रूपमत्यन्तनिर्मलम्" इत्यादिश्रुतिस्मृतिभ्यः । द्वितीयस्तु सुषुप्तिमूर्च्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेः, जाग्रतोऽपीन्द्रियव्यापारान्वयव्यतिरेकानुवि- धायित्वाच्चैतन्यस्य,[४]"न प्रेत्य संज्ञास्ति"इति मुक्तस्य चैतन्यप्रतिषेधाच्च,पाषा- णकल्प एवागन्तुकचैतन्यगुणः । सर्वत्र कार्योपलब्धेस्सर्वत्र सन्निधानात्, शरीरगमनेनैव कार्यसम्भवे गतिकल्पनायोगात्, सर्वगतश्चेति । राद्धान्तस्तु —[५]"अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान्कामान्पश्यन्रमते" [६]"न पश्यो मृत्युं पश्यति""सर्वं ह पश्यः पश्यति" [७]"द्रष्टा श्रोता घ्राता रसयिता" इत्यादिश्रुतिभ्यो बद्धमुक्तोभयावस्थो ज्ञातैवात्मा । ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य प्रधानगुणत्वात्, स्वरूपानुबन्धित्वेन स्वरूपनिरूपकगुणत्वात्, आत्मस्वरूपस्य ज्ञानवत्स्वप्रकाशत्वाच्चोपपद्यते । सुषुप्तिमूर्च्छादौ सदेव ज्ञानं कर्मणा संकुचि- तमनभिव्यक्तमपि जागरादौ विकसितमभिव्यज्यत इति न विरोधः ।[४]"न प्रेत्य संज्ञाऽस्ति" इति सांसारिकदेहाद्यस्मरणविषयम्, [८]"नोपजनं स्मरन्निदं शरी- रम्" इत्यादिनैकार्थ्यात् । सर्वगतत्वन्तु अणुत्वगत्यादिश्रुतिविरुद्धम् । सूत्रा- र्थस्तु—ज्ञोऽत एव—अतः - श्रुतेः ज्ञातैव ॥ १९ ॥

उत्क्रान्तिगत्यागतीनाम्॥ श्रुतेः इति वर्तते ।[९]"तेन प्रद्योतेनैष

---

१. तै. आन. ५-१॥—२. बृ. ५-७-२२॥—३. वि-पु.१-२-६॥—४.बृ.४-४-१२॥ —५. छा. ८-१२-४ ॥—६. छा. ७-२६-२ ॥—७. प्रश्न.४-९ ॥—८. छा.८-१२-३॥ —९. बृ.६-४-२॥

आत्मा निष्क्रामति" १"ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" २"तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इत्याद्युत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीवः ॥ २० ॥

**स्वात्मना चोत्तरयोः॥** चशब्दोऽवधारणार्थः; यद्यप्युत्क्रान्तौ स्थितस्य शरीरविश्लेषेण कथंचित्संपाद्यत्वमस्ति उत्तरयोः गमनागमनयोस्तु स्वात्मनैव सम्पाद्यत्वमवश्याभ्युपेयम् ॥ २१ ॥

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥** ३"योऽयं विज्ञानमयः" इति जीवं प्रस्तुत्य ४"स वा एष महानज आत्मा" इति महत्त्वश्रुतेः नाणुः जीव इति चेन्न; इतराधिकारात् जीवेतरपरमात्माधिकारात् —५"यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति हि मध्ये परमात्मा प्रस्तुतः ॥ २२ ॥

**स्वशब्दोन्मानाभ्याञ्च ॥** ६"एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन्प्राणः पञ्चधा संविवेश" इति साक्षादणुशब्दादणुरेवायम् । उन्मानाच्चाणुरेव। उन्मानम्— उद्धृत्य मानम्। ७"आराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्याराग्रमुद्धृत्य तन्मानत्वं हि जीवस्य श्रूयते ॥ २३ ॥

आत्मनोऽणुपरिमाणत्वे सकलदेहव्यापिसुखाद्यनुभवः कथमित्यत्र मतान्तरेण परिहारमाह—

**अविरोधश्चन्दनवत् ॥** यथा हरिचन्दनबिन्दुः देहैकदेशवर्त्यपि सकलदेहवर्तिनमाह्लादं जनयति, तद्वदविरोधः ॥ २४ ॥

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि॥** चन्दनबिन्दोर्देहैकदेशविशेषस्थित्यपेक्षस्तथाभावः; आत्मनस्तु न तथेति चेन्न, आत्मनोऽपि तथाभावाभ्युपगमात्; हृदि ह्ययमात्मा स्थितः" इति श्रूयते ६"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इत्यादौ ॥ २५ ॥

स्वमतेनाह—

**गुणाद्वाऽऽलोकवत्॥** वाशब्दो मतान्तरव्यावृत्त्यर्थः; आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः; यथा द्युमणिमणिप्रभृतीनामेकदेशवर्तिनामालोकः तद्गुणः अनेकदेशव्यापी दृश्यते ॥ २६ ॥

१. कौषी. १ २॥—२. बृ. ६-४-६ ॥—३. बृ. ६-३-७॥—४. बृ. ६-४-२५ ॥—५. बृ. ६-४-१३॥—६. मु. ३-१-९॥—७. श्वे. ५-८॥

१"विज्ञानं यज्ञं तनुते" इत्यादौ ज्ञानमेव आत्मेति व्यपदिश्यते इति चेत् —तत्राह—

**व्यतिरेको गन्धवत्तथा च दर्शयति॥** जानामि इत्यात्मगुणत्वेन प्रतीतेः व्यतिरेकोऽभ्युपगमनीयः; यथा "गन्धवती पृथिवी" इत्युपलब्धौ गन्धस्तद्गुणस्तद्व्यतिरिक्तः। दर्शयति च श्रुतिः २"जानात्येवायं पुरुषः" इति ॥ २७ ॥

**पृथगुपदेशात् ॥** न केवलं जानामीति पृथगुपलब्धिमात्रम्; आत्मनः पृथक्त्वेनोपदिश्यते च ज्ञानम्; ३"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति॥

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥** ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः; यथा ४"प्राज्ञेन" ५"ब्रह्मणा विपश्चिता" ६"यस्सर्वज्ञस्सर्ववित्" इति सर्वज्ञ एव सर्वज्ञानगुणसारत्वात् ७"सत्यं ज्ञानम्" इति व्यपदिश्यते ॥

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥** ज्ञानस्य यावदात्मस्वरूपभावित्वाच्च तेन तद्व्यपदेशो न दोषः, खण्डादिषु तथादर्शनात्; खण्डादिषु हि यावत्स्वरूपभाविधर्मत्वेन गोत्वस्य गौरिति व्यपदेशो दृश्यते। चकारादात्मनः स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशे न दोष इत्युच्यते ॥ ३० ॥

सुषुप्त्यादिषु ज्ञानस्यानुपलब्धेः न यावदात्मभावित्वमित्याशङ्क्याह—

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥** तुशब्दश्शङ्कानिवृत्त्यर्थः; सुषुप्त्यादिष्वपि सतो ज्ञानस्यानभिव्यक्तस्य जागर्यादिष्वभिव्यक्तिसम्भवात् यावदात्मभाव्येव ज्ञानम्; पुंस्त्वादिवत्—पुंस्त्वमिति पुरुषासाधारणधातुरुच्यते; यथा सप्तधातुमयत्वेन शरीरस्य पुंस्त्वस्य बाल्येऽपि सतोऽनभिव्यक्तस्य सप्तमधातोः युवत्वेऽभिव्यक्तिः ॥ ३१ ॥

एवमात्मनो ज्ञातृत्वमणुत्वं चोक्त्वा पक्षान्तरे दोषमाह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥** अन्यथा ज्ञानात्मवादे सर्वगतात्मवादे च उपलब्ध्यनुपलब्धी नित्यवत् प्रसज्येयाताम्; उपलब्ध्यनुपलब्ध्योरन्यतरनियमो वा। ज्ञानात्मपक्षे तावत् ज्ञानस्य प्रकाशस्वभावत्वात्प्रकाशपर्यायोपलब्धेर्नित्यवत्प्रसक्तिरनिवार्या; ज्ञाने विद्यमाने सति हेत्वन्तरेणानुपलब्धिजननायोगात् ज्ञानमेवानुपलब्धेरपि हेतुरित्यास्थे-

१. तै. आन. ५-१—२. —३. बृ. ६-३-३०॥—४. बृ. ६,३-२१॥—५. तै. आन १-२॥—६. मु. १-१-९॥—७. तै. आन. १-१ ॥

यम् । ज्ञानस्य सर्वदा वर्तमानत्वात्सर्वदोभयप्रसक्तिः । अथ युगपद्विरुद्धकार्यजननायोगात् ज्ञानमुपलब्ध्यनुपलब्ध्योरन्यतरहेतुरास्थीयते । तदाऽन्यतरनियमस्स्यात् । सर्वगतत्वपक्षे यथा ज्ञानात्मवादिनाम् , तथैव हेतुजन्यज्ञानवादिनोऽपि सर्वेषामात्मनां सर्वगतत्वे सर्वस्यात्ममनस्संयोगादेः हेतोस्सर्वेषां साधारणत्वात् उक्तरीत्या तथैव प्रसक्तिः। अदृष्टोत्पत्तिहेतोरपि सर्वस्य साधारणत्वाददृष्टेनापि न व्यवस्था ॥ ३२ ॥

इति वेदान्तदीपे ज्ञाधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये कर्त्रधिकरणम् ॥ ५ ॥ )

---

# कर्ता शास्त्रार्थवत्त्वात् । २ । ३ । ३३ ॥

अयमात्मा ज्ञाता, स चाणुपरिमाण इत्युक्तम्; इदानीं किं स एव कर्ता; उत स्वयमकर्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते । किं युक्तम्, अकर्तैवात्मेति, कुतः ? आत्मनो ह्यकर्तृत्वम्, गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते।तथाहि कठवल्लीषु जीवस्य[१] "न जायते म्रियते" इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते—[२]"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति। हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः। तथा च भगवता स्वयमेव जीवस्याकर्तृत्वं स्वरूपम्; कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते—[३]"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते"[४]"नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति"[५]"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते"इति च। अतः पुरुषस्य भोक्तृत्वमेव प्रकृतेरेव तु कर्तृत्वम्—इति॥

---

१. कठ. २-१८ ॥—२. कठ. २.१९॥—३. गी. ३-२७ ॥—४. गी.१४-१९ ॥
५. गी. १३-२० ॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—कर्ता शास्त्रार्थवत्त्वात्—इति। आत्मैव कर्ता; न गुणाः, कस्मात्? शास्त्रार्थवत्त्वात्। शास्त्राणि हि 'यजेत स्वर्गकामः' 'मुमुक्षुर्ब्रह्मोपासीत' इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते ; नह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते। शासनाच्च शास्त्रम्; शासनं च प्रवर्तनम्; शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण; अचेतनं च प्रधानं न बोधयितुं शक्यम्। अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत्। तदुक्तं [१]"शास्त्रफलं प्रयोक्तरि" इति। यदुक्तं [२]"हन्ता चेन्मन्यते" इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति ; तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते। यच्च [३]"प्रकृतेः क्रियामाणानि" इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति ; तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता ; न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृतेत्युच्यते। तथा च तत्रैवोच्यते [४]"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति। तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते [५]"तत्रैवं सति कर्तारमात्मानं केवलं तु यः।पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इति। [६]"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इत्यधिष्ठानादिदैवपर्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलं कर्तारं मन्यते, न स पश्यतीत्यर्थः ॥ ३३ ॥

## उपादानाद्विहारोपदेशाच्च ।२।३।३४॥

[७]"स यथा महाराजः" इति प्रकृत्य, [७]"एवमेवैष एतान् गृहीत्वा स्वेशरीरे यथाकामं परिवर्तते" इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥ ३४ ॥

१. पूर्वमीमांसान्यायः ॥—२. कठ. २-१९॥—३. गी. ३-२७ ॥—४. गी. १३-२१ ॥—५. गी. १८-१६॥—६. गी. १८-१४॥—७. बृ. ४-१-१८॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः।२।३।३५

[१] "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपिच" इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता। विज्ञानशब्देन नात्मनो व्यपदेशः; अपित्वन्तःकरणस्य बुद्धेरितिचेत्—एवंसति निर्देशविपर्ययस्स्यात्-बुद्धेः करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशस्स्यात् ॥ ३५ ॥

## उपलब्धिवदनियमः। २। ३। ३६॥

आत्मनोऽकर्तृत्वे दोष उच्यते। यथाऽऽत्मनो विभुत्वे नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यादिनोपलब्धेरनियम उक्तः; तद्वदात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्यास्सर्वपुरुषसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युः;नैव वा कस्य चित्।आत्मनां विभुत्वाभ्युपगमात्सन्निधानमपि सर्वेषामविशिष्टम्। अतएव चान्तःकरणादीनामपि नियमो नोपपद्यते; यदायत्ता व्यवस्था स्यात् ॥ ३६ ॥

## शक्तिविपर्ययात्।२।३।३७॥

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत। भोक्तृत्वं च बुद्धेरेव संपद्यत इति आत्मसद्भावे प्रमाणाभावश्च स्यात्। [२] "पुरुषोऽस्ति भोक्तृभावात्" इति हि तेषामभ्युपगमः ॥ ३७ ॥

## समाध्यभावाच्च।२।३।३८॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात्। स च समाधिः प्रकृतेरन्योऽस्मीत्येवंरूपः; नच प्रकृतेरन्योऽस्मीति प्रकृतिस्समाधातुमलम्। अतोऽप्यात्मैव कर्ता ॥ ३८ ॥

१. तै. आन. ५-१ ॥—२. सांख्यतत्वकौमुदी. २७. पा ॥

नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वान्नोपरमेतेत्यत्राह—

## यथा च तक्षोभयथा । २। ३। ३९॥

वागादिकरणसम्पन्नोऽप्यात्मा यदेच्छति, तदा करोति, यदा तु नेच्छति, तदा न करोति; यथा तक्षा वाश्यादिकरणसन्निधानेऽपि इच्छानुगुण्येन करोति, न करोति च । बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात्सर्वदा कर्तृत्वमेव स्यात् ॥ ३९ ॥

इति श्रीशारीरकमीमांसाभाष्ये कर्त्रधिकरणम् ॥ ५ ॥

---

वेदान्तसारे—कर्ता शास्त्रार्थवत्त्वात्॥ ज्ञाता सन्नयमात्मा कर्मसु कर्ता च । आत्मनः अकर्तृत्वे, 'कुर्यात् न कुर्यात्' इति शास्त्रानर्थक्यं स्यात् ॥

उपादानाद्विहारोपदेशाच्च॥ [1]"प्राणान् गृहीत्वा स्वे शरीरे यथा कामं परिवर्तते" इत्युपादानविहारोपदेशाच्च कर्ता ॥ ३४ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥ [2]"विज्ञानं यज्ञं तनुते" इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्च कर्ता । विज्ञानशब्दो बुद्धेः, नात्मनः इति चेत्, न । तदा विज्ञानेन इति निर्देशविपर्ययः स्यात्, बुद्धेः करणत्वात् ॥ ३५ ॥

उपलब्धिवदनियमः ॥ प्रकृतेरेव कर्तृत्वे तस्यास्सर्वसाधारणत्वेन पूर्वोपलब्ध्यनियमवत् फलानियमस्स्यात् ॥ ३६ ॥

शक्तिविपर्ययात् ॥ प्रकृतेरेव कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यादित्यर्थः ॥ ३७ ॥

समाध्यभावाच्च ॥ प्रकृतेरेव कर्तृत्वे "प्रकृतेरन्योऽस्मि" इति समाध्यभावप्रसङ्गाच्च ॥ ३८ ॥

यथा च तक्षोभयथा ॥ आत्मनः कर्तृत्वे 'इच्छायां करोति, अन्यथा न करोति' इति व्यवस्था च सिध्यति । यथा तक्षा स्वकार्येषु । बुद्धेरिच्छाभावात् न व्यवस्था, चेतनधर्मत्वादिच्छायाः ॥ ३९ ॥

इति वेदान्तसारे कर्त्रधिकरणम् ॥ ५ ॥

---

१. बृ. ४-१-१८ ॥—२. तै. आन. ५. १ ॥

वेदान्तदीपे—कर्ता शास्त्रार्थवत्त्वात्॥ आत्मनो ज्ञातृत्ववत्कर्तृत्वमप्यस्ति, नेति संशयः। प्रधानस्यैव कर्तृत्वादात्मनो न कर्तृत्वमस्ति इति पूर्वः पक्षः। १"अहङ्कारविमूढात्मा कर्ताऽहमितिमन्यते" २"नान्यं गुणेभ्यः कर्तारम्" इत्यादिषु गुणानामेव कर्तृत्ववचनात्। राद्धान्तस्तु—स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्तैवात्मा, बोद्धुरेव हि शासनम्; नाचेतनस्य प्रधानस्य। "यजेत" "उपासीत" इति कर्तरि लकारः। अतः कर्तारमेव बोधयति शास्त्रम्। सूत्रमपि व्याख्यातम्॥ ३३॥

उपादानाद्विहारोपदेशाच्च॥ उपादानात् उपदिश्यमानात्, विहारोपदेशाच्च। उपदिश्यते उपादानं, विहारश्च, ३ "एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति उपादानविहारयोः कर्तृत्वोपदेशाच्च कर्ता॥ ३४॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥ ४"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपिच" इति यज्ञादिकर्मस्वात्मनः कर्तृत्वोपदेशाच्च कर्ता। विज्ञानशब्देन नात्मनो व्यपदेशः, अपित्वन्तःकरणरूपबुद्धेरेवेति चेत्—तथासति विज्ञानेनेति करणविभक्तिनिर्देशस्स्यात्॥ ३५॥

उपलब्धिवदनियमः॥ प्रधानस्य कर्तृत्वेन आत्मनो भोक्तृत्वमिति पक्षे पूर्वोक्तोपलब्ध्यनियमवत्प्रधानस्य सर्वसाधारणत्वात् भोक्तृत्वानियमः। अन्तःकरणभेदेऽपि सर्वेषामात्मनां सर्वगतत्वेन साधारण्यमनिवार्यम्॥ ३६॥

शक्तिविपर्ययात्॥ बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वायोगात् भोक्तृत्वशक्तिरपि बुद्धेरेवेति आत्मनो भोक्तृत्वशक्तिविपर्ययः—हानिरित्यर्थः॥

समाध्यभावाच्च॥ प्रकृतेः कर्तृत्वे मोक्षसाधनभूतसमाध्यभावश्च स्यात्। 'प्रकृतेरन्योस्मीति' समाधाने प्रकृतेः कर्तृत्वायोगात्॥ ३८॥

यथा च तक्षोभयथा॥ आत्मनः कर्तृत्वेऽपि 'भोगवाञ्छायां करोति, अन्यथा न करोति' इत्युभयप्रकारव्यवस्थोपपद्यते; यथा तक्षा स्वकार्ये इच्छया व्यवस्थितः। बुद्धेः कर्तृत्वे अचेतनत्वेन स्वेच्छाया अभावाद्व्यवस्था न सिध्यतीत्यभिप्रायः॥ ३९॥

इति वेदान्तदीपे कर्त्रधिकरणम्॥ ५॥

---

१. गी. १४-९॥—२. गी. १६-२०॥—३. बृ. ४-१-१८॥—४. तै. आन. ५-१॥

# परात्तु तच्छ्रुतेः । २। ३। ४०॥

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण? उत परमात्मायत्तमिति। किं प्राप्तम्? स्वातन्त्र्येणेति। परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत। यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भशक्तः; स एव नियोज्यो भवति। अत स्स्वातन्त्र्येणास्य कर्तृत्वम् ॥

(सिद्धान्तः)

इति प्राप्तेऽभिधीयते--परात्तु तच्छ्रुतेः—इति। तुशब्दः पक्षं व्यावर्तयति; तत्—कर्तृत्वं अस्य—जीवस्य परात्—परमात्मन एव हेतोर्भवति, कुतः श्रुतेः—[१] "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" [२] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति। स्मृतिरपि [३] "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिः ज्ञानमपोहनं च" [४] "ईश्वरस्सर्वभूतानां हृद्देशेर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति ॥ ४० ॥

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तम्; तत्राह—

# कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः । २ । ३ । ४१ ॥

सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नम् उद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति। परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यत इत्यर्थः। कुत एतत्? विहितप्रतिषिद्धावैयर्थ्यादिभ्यः—आदिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते। यथा द्वयोस्साधारणे धने परस्वत्वापादनमन्य-

१. तै. आरण. ३-११-१० ॥—२. बृ. ५-७-२२ ॥—३. गी. १५-१५ ॥—४. गी. १८-६१ ॥

तरानुमतिमन्तरेण नोपपद्यते ; अथापीतरानुमतेः स्वेनैव कृतमिति तत्फलं स्वस्यैव भवति । पापकर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितम् । नन्वेवम् [१] "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषति" इत्युन्निनीषयाऽधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीत्येतन्नोपपद्यते । उच्यते–एतन्न सर्वसाधारणम्, यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते ; तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्मस्वेव रुचिं जनयति । यश्चातिमात्रप्रातिकूल्ये व्यवस्थितः प्रवर्तते ; [२]तं निगृह्णन् स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु रुचिं जनयति । यथोक्तं भगवता स्वयमेव [३]"अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः" इत्यारभ्य [४]"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" [५]"तेषामेवानुकम्पार्थमहमज्ञानजं तमः नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति। तथा [६]"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादि [७]"मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" इत्यन्तमुक्त्वा [८]"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्युक्तम् ॥ ४१ ॥

इति श्रीशारीरकमीमांसाभाष्ये परायत्ताधिकरणम् ॥ ६ ॥

---

वेदान्तसारे–परात्तुतच्छ्रुतेः॥ [९]"य आत्मानमन्तरो यमयति" इत्यादिश्रुतेरात्मनः कर्तृत्वं परायत्तम्, [१०]"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" इत्यादिस्मृतेश्च ॥ ४० ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुभूतं प्रयत्नं करोति, जीवेन तु कृतं प्रयत्नं प्रथमप्रवृत्तिहेतुम-

१. कौषी. ३-९ ॥—२. तं स्वप्राप्तिविरोधिषु अधोगतिसाधनेषु कर्मसु सज्जयति. पा॥ ३. गी. १०-८ ॥—४.—५. गी. १०-१०,११ ॥—६. गी. १६-८ ॥—७. गी. १६-१८ ॥—८. गी. १६-१९ ॥—९. बृ. ५-७-२२ ॥—१०. गी. १५-१५ ॥

पेक्ष्य तदनुमतिदानेन परः प्रवर्तयति—इति तद्विधिनिषेधावैयर्थ्यनिग्रहानुग्रहेभ्योऽवगम्यते। यथा गुरुतरदार्वादिभरणमबलः प्रबलसहकृतः कुर्वन्नपि स्वीय प्रयत्नेन विधिनिषेधयोग्यो भवति ; एवमेव जीवः परमपुरुषानुमतिसहकृत प्रवर्तमानोऽपि विधिनिषेधयोग्य इति न कश्चिद्विरोधः ॥ ४१ ॥

इति वेदान्तसारे परायत्ताधिकरणम् ॥ ६ ॥

---

वेदान्तदीपे—परा । तु छूतेः ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ इदानीं जीवस्य कर्तृत्वं किं परमात्मायत्तम् ? उत स्वायत्तमितिसंशयः। स्वायत्तमिति पूर्वः पक्षः, विधिनिषेधशास्त्रानर्थक्यापत्तेः यस्स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिशक्तः स एव हि नियोज्यो निग्रहानुग्रहास्पदं च भवतीति । राद्धान्तस्तु १ ' अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा " २ " य आत्मानमन्तरो यमयति " इत्यादिश्रुतेः परमात्मायत्तमेव कर्तृत्वम् ; तत्र जीवेन स्वबुद्ध्या कृतं प्रयत्नमपेक्ष्य तदनुमतिदानेनेति विधिनिषेधावैयर्थ्यम्; अतएव निग्रहानुग्रहास्पदं च । सूत्रद्वयमपि व्याख्यातम् ॥ ४१ ॥

इति वेदान्तदीपे परायत्ताधिकरणम् ॥ ६ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अंशाधिकरणम् ॥ ७ ॥ )

---

# अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके । २ । ३ । ४२ ॥

जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्; इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते; श्रुतिविप्रतिपत्तेस्संशयः । ननु ३" तदनन्यत्वमारम्भणशब्दादिभ्यः " ४"अधिकं तु भेदनिर्देशात्" इत्य-

---

१. तै. आरण. ३-११-२० ॥—२. बृ. ५-७-२२ ॥—३. शारी. २-१-१५ ॥—४. शारी. २-१-२२ ॥

ष्वक्तो यातीति प्राप्तम्।पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति ॥

(सिद्धान्तः)

तत्र सिद्धान्तमाह—तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः—इति। १"संज्ञामूर्तिकॢप्तिः" इति मूर्तिशब्देन देहः प्रस्तुतः; स तच्छब्देन परामृश्यते। तदन्तरप्रतिपत्तौ—देहान्तरगमने भूतसूक्ष्मैस्सम्परिष्वक्तो जीवो रंहति—गच्छतीत्यर्थः। कुतः? प्रश्ननिरूपणाभ्यां—प्रश्नप्रतिवचनाभ्याम्। पञ्चाग्निविद्यायामेवं प्रश्नप्रतिवचने आम्नायेते—श्वेतकेतुं किलारुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं, पुनरावृत्तिप्रकारं, देवयानपितृयाणपथव्यावर्तने, अमुष्य लोकस्याप्राप्तारं च वेत्थेति पृष्ट्वेदमपि पप्रच्छ—२"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। तत इमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा ३"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा सम्भवति" इत्यादिना—देवाख्याः जीवस्य प्राणाः अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति; सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते; तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति; स च देहस्तत्र प्रक्षिप्तो वर्षं भवति; तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तमन्नं भवति; तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति; तच्च तत्र रेतो भवति; तच्च त एव योषायामग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तं गर्भो भवतीत्युक्त्वा आह—४"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। एवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या भवन्तीत्यर्थः। एवमुक्ते पूर्वास्वप्याहुतिष्वनुवर्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति। अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैस्सह तत्रतत्र यातीति गम्यते ॥ १ ॥

१. शारी. २-४-१७ ॥—२. छा. ५-३-३ ॥—३. छा. ५-४-२ ॥—४. छा. ५-९-१ ॥

ननु १"आपः पुरुषवचसः" इत्युक्ते अपां पुरुषाकारपरिणामप्रतीतेर्गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते; अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इति; तत्राह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् । ३ । १ । २ ॥

तुशब्दश्चोद्यं व्यावर्तयति । देहारम्भकाणामपां केवलानां न देहारम्भसम्भवः । देहाद्यारम्भाय हि २"तासां त्रिवृतंत्रिवृतमेकैकामकरोत्" इति त्रिवृत्करणम् । केवलानामपां श्रवणं तु तासां भूयस्त्वात् । देहे च लोहितादिभूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते ॥ २ ॥

## प्राणगतेश्च । ३ । १ । ३ ॥

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिश्श्रूयते—३"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति । स्मर्यते च—४"मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" इति । नच निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् । ३।१।४॥

५"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणश्चक्षुरादित्यम्" इत्यादिना प्राणानां जीवमरणकाले अग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेतिचेत्—न, भाक्तत्वात् अग्न्यादिष्वप्ययश्रवणस्य । कथं भाक्तत्वम्? ५"ओषधीर्लोमानि वनस्पतीन् केशाः" इत्यनपियद्भिर्लोमादिभिस्सह श्रवणात् । अतश्चक्षुराद्य-

१. छा. ५-९-१ ॥—२. छा. ६-३-३॥—३. बृ. ६-४-२ ॥—४. गी. १५-७॥
५. बृ. ५-२-१३ ॥

ष्ययश्रुतिरधिष्ठातृदेवतापक्रमणपरा ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः।३।१।५॥

यदुक्तमद्भिस्सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति ; तन्नोपपद्यते, द्युलोकाग्निविषये प्रथमे होमे अपां होम्यत्वाश्रवणात् । [1]"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतो नापस्तत्र होम्या इति चेत्—न, यतः ताः—आप एव श्रद्धाशब्देन तत्राभिधीयन्ते; कुतः? प्रश्नप्रतिवचनोपपत्तेः। [2] "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इतिप्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता ; तत्र यदि श्रद्धाशब्देनापो नोच्येरन् ; ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्यसङ्गतं स्यात् । [3] "इति तु पञ्चम्यामाहुतावापः पुरुषवचसः" इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति । [2]"वेत्थ यथा" इति हि प्रश्नगतः प्रकारः [3]"इति तु पञ्चम्याम्" इतीतिशब्देन परिहारे निगम्यते । श्रद्धासोमराजवर्षान्नरेतोगर्भरूपेणापां परिणाममुक्त्वा ह्येवमापः पुरुषवचस इति निगम्यते । श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते—[4]"अपः प्रणयति श्रद्धा वा आपः" इति । [1]"श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा सम्भवति"इति सोमाकारेण परिणामश्चापामेवोपपद्यते । अतो भूतान्तरसंसृष्टाभिरद्भिस्सम्परिष्वक्तो जीवो रंहतीत्युपपन्नम् ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः।३।१।६॥

यत्पुनरुक्तमद्भिस्संपरिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत इति ; तन्नोपपद्यते, अस्मिन्वाक्ये जीवस्याश्रवणात् । अत्र हि

---

१. छा. ५-४-२ ॥—२. छा. ५-३-३ ॥—३. छा. ५-९-१ ॥—४. ३.अष्ट.२-४-३३ ॥

श्रद्धादय एवाम्ब्ववस्थाविशेषा होम्यत्वेन श्रुताः; न तु जीवस्तत्परिष्वक्त इतिचेत्—तन्न, इष्टादिकारिणां प्रतीतेः—अस्मिन्नेव वाक्ये ह्युत्तरत्र ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो भवन्ति; पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्तीत्युच्यते [1] "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इत्यारभ्य [1] "पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" [1] "तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" [1] "योयो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" इति। अत्रापि द्युलोकाग्नौ [2] "श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा सम्भवति" इति तदेकार्थत्वाच्छ्रद्धावस्थदेहविशिष्टस्सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते। देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति; अतस्सम्परिष्वक्तो जीवो यातीत्युपपद्यते ॥ ६ ॥

ननुच [1] "तं देवा भक्षयन्ति" इति देवैर्भक्ष्यमाणत्ववचनात् [1] "सोमो राजा" इति न जीव उच्यते, जीवस्यानदनीयत्वात्; तत्राह—

## भाक्तं वानात्मवित्वात्तथाहि दर्शयति। ३।१।७॥

वाशब्दश्चोद्यं व्यावर्तयति। इष्टादिकारिणोऽनात्मवित्त्वात्स देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते। इहेष्टादिना तदाराधनं कुर्वन्नुपकरोति; आराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणंभवति। [3] "यथा पशुरेवं स देवानाम्" इत्यनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः। स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिमनात्मविदां च देवभोग्यत्वं दर्शयति [4] "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति। अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्; अतस्तद्भाक्तम्। तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते [5] "न वै देवा अश्नन्ति न पिब-

---

१. छा. ५-१०-३,४,५,६, ॥— २. छा. ५-४-२ ॥— ३. बृ. ३-४-१० ॥— ४. गी. ७-२३ ॥—५. छा. ३-६-१ ॥

न्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति"इति। तस्माद्भूतसूक्ष्मैस्सम्परिष्वक्तो जीवो रंहतीति सिद्धम्॥ ७॥

इति श्रीशारीरकमीमांसाभाष्ये तदन्तरप्रतिपत्त्यधिकरणम्॥ १॥

---

वेदान्तसारे—तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्॥ जीवो देहाद्देहान्तरप्राप्तौ भूतसूक्ष्मैस्संपरिष्वक्तो यातीति पञ्चाग्निविद्यायां प्रश्नप्रतिवचनाभ्यामवगम्यते। १"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नः, २"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रतिवचनम्। ३उत्तरैस्सूत्रैरर्थोऽभिव्यज्यते। सचायमर्थः—जीवो ब्राह्मणादिदेहस्थः ४स्वाहादानादिकर्मकृत् तत्तत्फलभोगायास्माद्देहादुत्थाय गच्छन्, एतद्देहस्थाभिः भूतान्तरसंसृष्टाभिः सूक्ष्माकाराभिरद्भिः सम्परिष्वक्तोऽग्नित्वेन निरूपितं द्युलोकं प्राप्य ताभिरेवामृतमयदेहाकारपरिणताभिरद्भिः परिष्वक्तो देवानां शेषत्वमुपगम्य तैस्सह तत्र भोगमनुभूय कर्मावसाने भुक्तशिष्टब्राह्मणादियोनिप्रापककर्मणा सह पुनरपीमं कर्मलोकमागम्य,कर्म कर्तुं ताभिः परिष्वक्तोऽग्नित्वरूपितं पर्जन्यं प्राप्य, वर्षधाराभिस्सहाग्नित्वनिरूपितपृथिवीमुपगम्य, व्रीह्यादिसस्येन संयुज्य, अन्नाकारपरिणतेन तेन सहाग्नित्वनिरूपितं पुरुषं प्राप्य, तत्र शुक्लाकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वनिरूपितां योषितं प्राप्य, तत्र गर्भाकारपरिणताभिस्ताभिरद्भिः पुरुषशब्दाभिलपनीयाभिः परिष्वक्तः कर्मानुरूपं ब्राह्मणादिरूपेण जायते—इति॥ १॥

त्र्यात्मकत्वात्तु भूयस्त्वात्॥ सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वात् भूतान्तरसंसृष्टा एवापो भूयस्त्वेनाप्छब्देनोच्यन्ते॥ २॥

प्राणगतेश्च॥ ५"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति जीवेन सहेन्द्रियगतेस्तदाश्रयत्वेन देहगमनं प्रतीयते॥ ३॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ६"अग्निं वागप्येति" इतीन्द्रियाणामग्न्यादिगतिश्रुतेर्न जीवेन गमनमितिचेत्—न, वागाद्यभिमानिदेवतासु भाक्तत्वात् वागादिशब्दानाम्, ६"ओषधीर्लोमानि" इत्यनपियद्भिर्लोमादिभिस्सहपाठात्॥ ४॥

---

१. छा. ५-३-३॥—२. छा. ५-९-१॥—३. तयोरुत्तरसूत्रैरर्थोऽभि. पा॥—४. यागदानादि. पा॥—५. बृ. ६-४-२॥—६. बृ. ५-२-१३॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥** प्रथमे—द्युलोकेऽपामश्रवणात् नापो गच्छन्ति ; १"एतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वति" इति श्रद्धैव श्रुतेति चेत्—न, आप एव श्रद्धाशब्देनोच्यन्ते—इत्यप्सु पृष्टासु तदुत्तरत्वोपपत्तेर्गम्यते ; २"श्रद्धा वा आपः" इति श्रूयते ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥** अत्र प्रश्नप्रतिवचनयोराप एव प्रतीयन्ते ; न तत्परिष्वक्तो जीव इति चेत्—न, उत्तरत्र ३"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते" इत्यादाविष्टादिकारिणां गमनप्रकारवचनात् । द्युलोकाग्निसम्बन्ध्यप्छब्दवाच्यस्य १"तस्या आहुतेस्सोमो राजा सम्भवति" इति सोमभूतस्यैव ३"सोमो राजा" इति प्रत्यभिज्ञानादद्भिः परिष्वक्तस्तच्छरीरक एव आप इत्युच्यते इत्यवगम्यते ॥ ६ ॥

**भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥** ३"एष सोमो राजा... तन्देवा भक्षयन्ति" इति सोमापन्नस्य देवैर्भक्ष्यमाणत्ववचनं , भाक्तम्—अनात्मवित्त्वेन देवोपकरणत्वाभिप्रायम् । तथा हि दर्शयति श्रुतिः । ४"यथा पशुरेवं स देवानाम्" इति पशुवद्देवोपकरणत्वन्दर्शयति ; तथात्मविदामनात्मविदाञ्च परमपुरुषोपकरणत्वं देवोपकरणत्वञ्च स्मर्यते ५"देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति ॥ ७ ॥

इति वेदान्तसारे तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

**वेदान्तदीपे—तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥** देही देहान्तरगमने देहकारणभूतैर्भूतसूक्ष्मैस्संयुक्तो गच्छति, नेति संसयः । न संयुक्तो गच्छतीति पूर्वः पक्षः, देहारम्भाय तत्रतत्र भूतसूक्ष्माणां सुलभत्वात् । राद्धान्तस्तु—पञ्चाग्निविद्यायां ६"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" ७"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नप्रतिवचने आम्नायेते । देहारम्भिका आपस्त्रिवृत्करणेन भूतान्तरसंसृष्टाः द्युलोकपर्जन्यपृथिवीपुरुषरूपाग्निषु जीवेन सह प्रविष्टाः पञ्चम्यामाहुतौ योषिदग्निप्रवेशवेलायां पुरुषशब्दाभिलपनीया भवन्तीति प्रतीयते ; पुरुषाकारतां भजन्त इत्यर्थः । अतो भूतसूक्ष्मैस्सम्परिष्वक्त एव गच्छतीति।सूत्रार्थस्तु—तदन्तरप्रतिपत्तौ—८"संज्ञामूर्तिक्लृप्तिः"इत्यत्र मूर्तिशब्देन दे-

---

१. छा. ५-४-२ ॥—२. ३. अष्ट. २-४ ३३ ॥—३ छा. ५-१०, ३, ४॥—४ ॥—५. गी. ७-२३॥—६.छा. ५-३-३॥—७.छा.५-९-१॥—८. शारी.२-४-१७॥

हः प्रस्तुतस्तच्छब्देन परामृश्यते ; देहान्तरप्रतिपत्तौ । रंहति सम्परिष्वक्तः— जीवो भूतसूक्ष्मैस्सम्परिष्वक्तो गच्छति । कुतः; प्रश्ननिरूपणाभ्यां—पञ्चाग्निविद्यान्तर्गतप्रश्नप्रतिवचनाभ्यां तथाऽवगम्यत इत्यर्थः ॥ १ ॥

कथमविशेषेणाप्छब्देन सर्वेषामभिधानमित्याशङ्क्याह—

त्र्यात्मकत्वात्तु भूयस्त्वात्॥ तुशब्दश्शङ्कानिवृत्त्यर्थः। अपां त्रिवृत्करणेन त्र्यात्मकत्वादाप इति भूतान्तरसंसृष्टा आपोऽभिधीयन्ते, अपां भूयस्त्वात् आधिक्यादप्छब्देनाभिधानम् ॥ २ ॥

प्राणगतेश्च ॥ इतश्च भूतसूक्ष्मैस्संयुक्तो याति । १"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति प्राणानाम् इन्द्रियाणां जीवेन सह गमनश्रुतेः इन्द्रियाणां देहाश्रयत्वेन देहोऽपि भूतसूक्ष्मरूपेण गच्छतीति गम्यते । स्मर्यते च २'मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति" इत्यादिना ॥ ३ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" इति मरणवेलायां वागादीनामग्न्यादिष्वप्ययश्रुतेर्जीवेन सह गमनश्रुतिरन्यथा नेयेतिचेत्; तन्न, भाक्तत्वात् तत्र वागादिशब्दानाम् । वागाद्यभिमानिदेवतासु हि तत्र वागादयश्शब्दाः । ३"ओषधीर्लोमानि वनस्पतीन्केशाः" इत्यनपियद्भिर्लोमादिभिस्सहपाठात् ॥४॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ प्रथमे—द्युलोकाग्निहोमे अपामश्रवणात् आपो भूतान्तरसंसृष्टा गच्छन्तीति वक्तुं न शक्यते; तत्र हि ४"तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वति" इति श्रद्धैव होम्यत्वेन श्रूयत इति चेत्—न, ताः - आप एव हि श्रद्धाशब्देनोच्यन्ते, प्रतिवचनस्य प्रश्नानुगुण्योपपत्तेः । ५"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यपां पुरुषवचस्त्वप्रकारे पृष्टे स एव हि प्रतिवक्तव्यः; अतश्श्रद्धाशब्देन ता आप एवोच्यन्ते । ६"श्रद्धा वा आपः" इति हि श्रूयते ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ५"आपः पुरुषवचसो भवन्ति" ४"श्रद्धां जुह्वति" इति द्युलोकादिष्वाप एव हि गच्छन्तीति श्रूयते; न तत्परिष्वक्तो जीवः । अतः प्रश्नप्रतिवचनयोर्जीवस्याश्रुतत्वात्तत्संयुक्तो जीवो गच्छतीति न शक्यते वक्तुमिति चेत्—तन्न, इष्टादिकारिणां प्रतीतेः-

१. बृ. ६-४-२ ॥—२. गी. १५-७॥—३. बृ. ५-२-१३॥—४. छा.५-४-२॥ —५. छा. ५-३-३ ॥—६. ३-अष्ट. २-४-३३ ॥

तेः—उत्तरत्र १"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इत्यादौ इष्टादिकारिणां जीवानां द्युलोकादिगमनपुनरावृत्तिप्रकारवचने द्युलोकाग्निसम्बद्धस्याप्छब्दवाच्यस्य सोममापन्नस्य प्रत्यभिज्ञानादत्रापि इति तत्संयुक्तो जीव एवोच्यते ॥ ६ ॥

१"आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" इति धूमादिना गतस्य देवैर्भक्ष्यमाणत्वश्रवणात् ,जीवस्याऽनदनीयत्वाच्च न जीवस्तत्रोक्त इत्याशङ्क्याह—

**भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥** वाशब्दश्शङ्काव्यावृत्त्यर्थः। १"तं देवा भक्षयन्ति"इति भक्ष्यत्ववचनं भाक्तम्—केवलेष्टादिकारिणामनात्मवित्त्वाद्देवोपकरणत्वाभिप्रायम् । अनात्मविदः केवलेन्द्रादिदेवयाजिनो हि देवान्प्राप्य तदुपकरणं भवन्ति । तथा हि दर्शयति श्रुतिः २"यथा पशुरेवं स देवानाम्" इति । अतो भूतसूक्ष्मैस्सम्परिष्वक्तो जीवो रंहति ॥ ७ ॥

इति वेदान्तदीपे तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

(श्रीशारीरकमीमांसाभाष्ये कृतात्ययाधिकरणम् ॥ २ ॥)

---

# कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च। ३।१।८॥

केवलेष्टापूर्तदत्तकारिणां धूमादिना पितृयाणेन पथा गमनं कर्मफलावसाने पुनरावर्तनं चाम्नातं १"यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" इति । तत्र प्रत्यवरोहन् जीवः किमनुशयवान् प्रत्यवरोहति, उत नेति संशय्यते । किं युक्तम्? कर्मणः कृत्स्नस्योपभुक्तत्वात् नानुशयवानिति प्राप्तम् । अनुशयो ह्युपभुक्तशिष्टं कर्म । तच्च कृत्स्नफलपभोगे सति नावशिष्यते । १ "यावत्सम्पातमुषित्वा" इति वचनात् कृत्स्नोपभोगश्च ज्ञायते । सम्पतन्त्यनेन स्वर्गं लोकमिति सम्पातः कर्मोच्यते। श्रुत्यन्तरं च

---

१. छा. ५-१०-३, ४, ५ ॥—२. बृ. ३-४-१० ॥

१ "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति ॥

(सिद्धान्तः.)

एवं प्राप्तेऽभिधीयते—अनुशयवान् प्रत्यवरोहति—इति। कुतः? दृष्टस्मृतिभ्यां—श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत्—२ "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिंवा" इति प्रत्यवरूढान् प्रति श्रूयते। अमुष्माल्लोकात्प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते; कपूयचरणाः-कुत्सितकर्माणः कुत्सितां श्वसूकरचण्डलादियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति। स्मृतिरपि—३ "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति" इति। तथा—४ "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रवदुभयोर्लोकयोस्सुख एव वर्तते" इति। २"यावत्सम्पातम्" इति फलदानप्रवृत्तकर्मविशेषविषयम्; १"यत्किंचेह करोत्ययम्" इतीदमपि तद्विषयमेव। अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः। अतोऽमुं लोकं गतास्सानुशया एव यथेतमनेवं च पुनर्निवर्तन्ते—आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः। आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण; अवरोहणं तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण। तत्राकाशावरोहणाद्यथेतम्; वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ॥ ८ ॥

१. बृ. ६-४-६॥—२. छा. ५-१०-७, ५॥—३. गौतम. २-प्र. ११-अ. १२,१३॥ —४. आपस्तम्ब. २-१-२-३ ॥

## चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः । ३ । १ । ९ ॥

[१]"रमणीयचरणाः" [१]"कपूयचरणाः" इति न चरणशब्देन पुण्यपापरूपं कर्माभिधीयते, चरणशब्दस्य लोकवेदयोराचारे प्रसिद्धेः; लौकिकाः खलु चरणमाचारः शीलं वृत्तमिति पर्यायानभिमन्यन्ते; वेदे च [२]"यान्यनवद्यानि कर्माणि तानि सेवितव्यानि" [२]"यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि" इति चरणकर्मणी भेदेन व्यपदिश्येते; अतः चरणात्—शीलात् योनिविशेषप्राप्तिः, नानुशयादितिचेत्—तन्न, चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते, केवलादाचारात्सुखदुःखप्राप्त्यसम्भवात् । सुखदुःखे हि पुण्यपापरूपकर्मफले ॥ ९ ॥

## आनर्थक्यमितिचेन्न तदपेक्षत्वात् । ३ । १ । १० ॥

एवं तर्ह्यफलत्वादाचारस्य स्मृतिविहितस्यानर्थक्यमेवेति चेत्—तन्न, तदपेक्षत्वात्पुण्यस्य कर्मणः । आचारवत एव पुण्यकर्मस्वधिकारः—[३]"सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु" [४]"आचारहीनं न पुनन्ति वेदाः" इत्यादिवचनेभ्यः । अतश्चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः । ३ । १ । ११ ॥

'पुण्यं कर्माचरति' 'पापं कर्माचरति' इति कर्मणि चरतेः प्रयोगात्, पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेः । मुख्ये सम्भवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते । अत्र बादरिमतमेव स्वमतम्; आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकार-

१. छा. ५-१०-७ ॥—२. तै. शिक्षा. ११-२ ॥—३ ॥—४ ॥

सम्पादनं फलमिति तु स्वीकृतम् । अतस्सानुशया एव प्रत्यवरोहन्ति ॥

इति श्रीशारीरकमीमांसाभाष्ये कृतात्ययाधिकरणम् ॥ २ ॥

---

वेदान्तसारे—कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ कृतस्य कर्मणोऽन्ते निवर्तमानो भुक्तशिष्टकर्मवान्निवर्तत इति श्रुतिस्मृतिभ्यामवगम्यते । १"रमणीयचरणाः...रमणीयां योनिमापद्यन्ते" इति श्रुतिः । २"ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपम्" इत्यादिका स्मृतिः । आरोहप्रकारेण मार्गैकदेशः, प्रकारान्तरेण चैकदेशः ॥ ८ ॥

चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ १"रमणीयचरणाः" इति चरणशब्दान्नानुशयः, चरणशब्दस्य स्मार्ताचारविषयत्वादिति चेत्—न, अनुशयोपलक्षणार्था आचारश्रुतिः, तस्यैव सुखसाधनत्वात् ॥ ९ ॥

आनर्थक्यमितिचेन्न तदपेक्षत्वात् ॥ स्मार्ताचारस्यानुपयोगात् आनर्थक्यमिति चेत्—न, तदपेक्षत्वात् सर्वस्य पुण्यकर्मणः, ३"सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु" इति वचनादिति कार्ष्णाजिनिमतम् ॥ १० ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ १"रमणीयचरणाः...कपूयचरणाः" इति चरणशब्देन सुकृतदुष्कृते एवाभिधीयेते । 'पुण्यं कर्माचरति' इति प्रसिद्धेरिति बादरिः। एतदेव स्वीकृतम् ; स्मार्ताचारापेक्षं सर्वं पुण्यं कर्मेति च स्वीकृतम् ॥ ११ ॥

इति वेदान्तसारे कृतात्ययाधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ धूमादिना गतो निवर्तमानो जीवः सानुशयो निवर्तते, उत नेति संशयः । नेति पूर्वः पक्षः । अनुशयो हि भुक्तशिष्टं कर्म । १"यावत्सम्पातमुषित्वा" ४"प्राप्यान्तं कर्मणः" इत्यादिश्रुतिभ्यः कृत्स्नस्य कर्मणोऽनुभूतताप्रतीतेः नानुशयवान्निवर्तते । राद्धान्तस्तु—१"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रियोनिं वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा

---

१. छा. ५-१०-७, ५ ॥—२. आपस्तम्ब. २-१-२-३॥—३॥—४. बृ. ६-४-६॥

चण्डालयोनिं वा'' इति रमणीयचरणा ब्राह्मणादियोनिं, कपूयचरणाः कुत्सितकर्माणः श्वसूकरादियोनिं प्रतिपद्यन्त इति श्रुतेः। [1]"प्राप्यान्तं कर्मणः" इत्यादिश्रुतिः फलप्रदानप्रवृत्तकर्मविषयेति सानुशयो निवर्तते। सूत्रार्थस्तु—कृतात्यये कृतस्य पूर्वकर्मणोऽत्यये, अनुशयवान् भुक्तशिष्टकर्मवान्निवर्तते; कुतः? दृष्टस्मृतिभ्याम्—श्रुतिस्मृतिभ्यामवगम्यते; [2]"तद्य इह रमणीयचरणाः" इत्यादिश्रुतिः; [3]"ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपम्" इत्यादिका स्मृतिः, यथेतमनेवं च—आरोहणप्रकारेण प्रकारान्तरेण च निवर्तन्ते। चन्द्रमसस्स्थानादाकाशमित्यारोहणक्रमेणावरोहन्ति, वायुधूमाभ्रादिना प्रकारान्तरेणच॥ ८॥

चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः॥ [2]"रमणीयचरणाः"इति रमणीयाचारस्य स्मृतिविहितस्य ब्राह्मण्यादिप्राप्तिसाधनत्वश्रवणात् न सकर्मा प्रत्यवरोहतीति चेत्—तन्न, चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते, पुण्यस्यैव कर्मणस्सुखप्राप्तिसाधनत्वात्॥ ९॥

आनर्थक्यमितिचेन्न तदपेक्षत्वात्॥ स्मृतिविहितस्याचारस्याकिञ्चित्करत्वेनानर्थक्यं प्रसज्यत इति चेत्—न, तदपेक्षत्वात्—आचारापेक्षत्वात्सुखसाधनभूतपुण्यकर्मणः; [4]"सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु" इति सर्वं हि पुण्यकर्माचारापेक्षमेवेति कार्ष्णाजिनेर्मतम्॥ १०॥

सुकृतदुष्कृते एवेति तु बादरिः॥ तुशब्दः पूर्वमतव्यावृत्त्यर्थः; [2]"रमणीयचरणाः.. कपूयचरणाः" इति चरणशब्देन सुकृतदुष्कृते एव कर्मणी प्रतिपाद्येते; 'पुण्यं कर्माचरति' इति चरतेः कर्मणि प्रसिद्धेः न लक्षणा न्याय्येति बादरिर्मन्यते। इदमेव सूत्रकाराभिप्रेतम्, तुशब्देन पूर्वमताद्व्यावृत्तेः सुकृतदुष्कृते एवेति व्यावर्तनात्। 'आनर्थक्यमितिचेन्न तदपेक्षत्वात्' इति तु स्वीकृतम्॥ ११॥

इति वेदान्तदीपे कृतात्ययाधिकरणम्॥ २॥

---

(श्रीशारीरकमीमांसाभाष्ये अनिष्टादिकार्यधिकरणम्॥३॥)

---

## अनिष्टादिकारिणामपि च श्रुतम्। ३। १। १२॥

---

१. बृ. ६-४-६॥—२. छा. ५-१०-७॥—३. आपस्त. २-१-२-३॥—४॥

केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम्; इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति, नेति चिन्त्यते। ये विहितं न कुर्वन्ति, निषिद्धं च कुर्वन्ति, त उभयेऽपि पापकर्माणोऽनिष्टादिकारिणः। किं युक्तम्? तेऽपि चन्द्रमसं गच्छन्तीति; कुतः? तेषामपि हि तद्गमनं श्रुतं–[1]"ये वैकेचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्यविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥

एवं तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गतिस्स्यात्; नेत्याह—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्। ३। १। १३ ॥

तुशब्दश्शङ्कां व्यावर्तयति; इतरेषाम् - अनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने-यमशासने तत्प्रयुक्तयातना अनुभूयैव, नान्यथा; कुतः? तद्गतिदर्शनात्–दृश्यते हि पापकर्मणां यमवश्यतया तद्गमनम् [2]"अयं लोको नास्ति न पर इतिमानी पुनःपुनर्वशमापद्यते मे" [3] "वैवस्वतं सङ्गमनं जनानां यमं राजानम्" इत्यादिषु ॥ १३ ॥

## स्मरन्तिच। ३। १। १४ ॥

स्मरन्ति च सर्वेषां यमवश्यतां पराशरादयः [4] "सर्वे चैते वशं यान्ति यमस्य भगवन्किल" इत्यादिषु ॥ १४ ॥

## अपि सप्त। ३। १। १५ ॥

पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति॥१५

ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः, अत आह—

---

१. कौषी. अ. १. २ ॥—२ ॥—३. आरण. २. प्र. १. प ॥ —४. वि. पु. ३-७-५ ॥

## तत्रापि तद्व्यापारादविरोधः । ३ । १ १६ ॥

तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः । अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चाच्चन्द्रारोहावरोहौ स्तः ॥ १६ ॥

(सिद्धान्तः)

इति प्राप्त उच्यते—

## विद्याकर्मणोरिति तु प्रकृतत्वात् । ३ । १ । १७॥

तुशब्दः पक्षव्यावृत्त्यर्थः। अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपद्यते ; कुतः ? विद्याकर्मणोरिति विद्याकर्मणोः फलभोगार्थत्वाद्देवयानपितृयाणयोः । एतदुक्तं भवति—अनिष्टादिकारिणां यथा विद्याविधुरत्वाद्देवयानेन पथा गमनं न सम्भवति ; तद्वदेवेष्टापूर्तदत्तविधुरत्वात्पितृयाणेन चन्द्रगमनमपि न सम्भवति--इति । देवयानपितृयाणयोः विद्याविषयत्वं पुण्यकर्मविषयत्वं च कथमवगम्यत इति चेत्—प्रकृतत्वात्तयोः । प्रकृता हि देवयाने विद्या, पितृयाणेच कर्म [1]"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्युक्त्वा [1]" तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" इत्यादिना देवयानवचनात्, [2] "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते " इत्युक्त्वा [2] " ते धूममभिसम्भवन्ति" इत्यादिना पितृयाणवचनाच्च। [3] "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्येतदपि वचनं 'य इष्टादिकारिणः ते सर्वे' इति परिणेयम् ॥

ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसम्भवाच्छरीरारम्भ एव नोपपद्यते ; [4] " पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " इति हि

१. छा. ५-१०-१ ॥—२. छा . ५-१०-३ ॥—३. कौषी. १. अ. २ ॥—४. छा. ५-९-१ ॥

शरीरारम्भश्श्रूयते, सा चाहुतिश्चन्द्रप्राप्तिपूर्विकेति दर्शितम्; अतश्शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहाववश्याभ्युपेत्याविल्यत आह—

## न तृतीये तथोपलब्धेः । ३ । १ । १८ ॥

* तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा; कुतः? तथोपलब्धेः—तृतीयस्थानशब्देन केवलपापकर्माण उच्यन्ते, तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते [१] "वेत्थ यथा केनासौ लोको न संपूर्यते" इत्यस्य प्रश्नस्य प्रतिवचने [२] "अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्वम्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते" इति तृतीयस्थानस्य द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा । [३] "पञ्चम्यामाहुतौ" इतिचापां पञ्चमाग्निसम्बन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति, नान्यन्निवारयति, अवधारणाश्रवणात् ॥

## स्मर्यतेऽपि च लोके । ३ । १ । १९ ॥

पुण्यकर्मणामपि केषाञ्चित्पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदीधृष्टद्युम्नप्रभृतीनाम् ॥ १९ ॥

## दर्शनाच्च । ३ । १ । २० ॥

श्रुतावपि दृश्यते केषाञ्चित्पञ्चमाहुत्यनपेक्षया देहारम्भः [३] "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्" इति एवमुद्भिज्जस्वेदजयोः भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ॥ २० ॥

ननु स्वेदजानामत्र न सङ्कीर्तनमस्ति [३] "त्रीण्येव बीजानि" इति वचनात्; तत्राह—

---

*तृतीयस्य स्थानस्य. पा॥—१. छा. ५-३-३॥—२.छा. ५-१० ८ ॥—३.छा.६-३-१॥

# तृतीयशब्दावरोधस्संशोकजस्य। ३ । १ । २१ ॥

संशोकजस्य-स्वेदजस्यापि १ "आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः सङ्ग्रहो विद्यत इत्यर्थः; अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न सम्भवति ॥ २१ ॥

इति श्रीशारीरकमीमांसाभाष्ये अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—अनिष्टादिकारिणामपि च श्रुतम् ॥ इष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्ति २"ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते" इत्यविशेषात् ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ इष्टापूर्ताद्यकुर्वतां यमसदने तत्फलमनुभूयारोहादिः, ३"वैवस्वतं सङ्गमनम्" इत्यादौ तद्गतिदर्शनात् ॥ १३ ॥

स्मरन्ति च ॥ ४"सर्वे चैते वशं यान्ति यमस्य" इति ॥ १४ ॥

अपि सप्त ॥ सप्त रौरवादीनपि स्मरन्ति ॥ १५ ॥

तत्रापि तद्व्यापारादविरोधः ॥ तत्रापि यमव्यापारादेव यमवश्यतया अविरोधः ॥ १६ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ विद्याकर्मणोः फलं ब्रह्मगमनं चन्द्रगमनञ्च। कथम्? ५"तद्य इत्थं विदुः तेऽर्चिषमभिसम्भवन्ति" ६"इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इति प्रकृतत्वात् ब्रह्मचन्द्रगमनयोः। अतः पापिनां न तद्गतिप्रसङ्गः ॥ १७ ॥

न तृतीये तथोपलब्धेः ॥ न च पापिनां द्युलोकगमनाय चन्द्रलोकगमनापेक्षा, तेषान्द्युलोकगमनाभावोपलब्धेः—७"अथैतयोः पथोर्न कतरेण च" इत्यारभ्य, ७"एतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते" इति। तृतीयस्थानमिति पापकर्माण उच्यन्ते ॥ १८ ॥

---

१. छा. ६-३-१ ॥—२. कौषी. १. अ. २ ॥—३. आरण. २. प्र. १. ५ ॥—४. वि. पु. ३-७-५ ॥—५. छा. ५-१०-१ ॥—६. छा. ५-१०-३ ॥—७. छा. ५-१०-८ ॥

स्मर्यतेऽपि च लोके ॥ लोके च द्रौपद्यादीनां पुण्यकर्मणामपि पञ्चमाह्युत्यनपेक्षदेहारम्भस्स्मर्यते ॥ १९ ॥

दर्शनाच्च ॥ तथा श्रुतावपि दृश्यते १"भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्" इति स्वेदजोद्भिज्जयोस्तदनपेक्षत्वम् ॥ २० ॥

तृतीयशब्दावरोधस्संशोकजस्य ॥ स्वेदजस्य उद्भिज्जशब्देन सङ्ग्रह इत्यर्थः ॥ २१ ॥

इति वेदान्तसारे अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—अनिष्टादिकारिणामपि च श्रुतम् ॥ विहिताकरणप्रतिषिद्धसेवारताः पापकर्माणोऽपि धूमादिना चन्द्रमसं गत्वा निवर्तन्ते,उत नेति संशयः । गत्वैव निवर्तन्त इति पूर्वः पक्षः, २"ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति सर्वेषामविशेषेण चन्द्रगमनश्रुतेः । राद्धान्तस्तु—३"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इति धूमादिना चन्द्रगमनस्य पुण्यकर्मफलत्वश्रवणात् तद्रहिताः पापकर्माणो न गच्छन्ति—इति । २"येवैकेच" इति वचनं सर्वेषां पुण्यकर्मणां चन्द्रगमनविषयम् । सूत्रार्थस्तु—अनिष्टादिकारिणामपिच श्रुतम्—अनिष्टादिकारिणामपि इष्टापूर्ताद्यकुर्वतां पापिनामपि चन्द्रगमनमस्ति, २"ये वै केचास्माल्लोकात्प्रयन्ति" इति यतोऽविशेषेण श्रुतम् ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ इयांस्तु विशेषः, संयमने-यमशासने पापफलमनुभूय इतरेषां पापिनां चन्द्रारोहावरोहौ ; कुतः ? तद्गतिदर्शनात् पापिनां यमसदनगतिदर्शनात् ४"वैवस्वतं सङ्गमनं जनानाम्" इत्यादौ ॥ १३ ॥

स्मरन्ति च ॥ ५"सर्वे चैते वशं यान्ति यमस्य भगवन्किल" इति पराशरादयस्स्मरन्ति च ॥ १४ ॥

अपि सप्त ॥ सप्तापि रौरवादयो लोकाः पापिनां गन्तव्यत्वेन स्मर्यन्ते ॥ १५ ॥

---

१ छा. ६-३-१ ॥—२. कौषी. १. अ. २॥—३. छा. ५-१०-३॥—४. आरण. २. प्र. १. प ॥—५. वि. पु. ३-७-५ ॥

ननु सप्तसु लोकेषु गच्छतां कथं यमव्यापारप्राप्तिः ; तत्राह—

**तत्रापि तद्व्यापारादविरोधः ॥** सप्तस्वपि रौरवादिलोकेषु यमव्यापारादेव गमनाद्यमवश्यताया अविरोधः । अतः पापिनामपि यमयातना अनुभूय चन्द्रारोहावरोहाववर्जनीयौ ॥ १६ ॥

इति प्राप्त उच्यते—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥** तुशब्दः पक्षव्यावृत्त्यर्थः ; न च पापकर्मणामर्चिरादिना ब्रह्मगमनं, धूमादिना चन्द्रगमनं च सम्भवति, तयोर्विद्याकर्मणोः फलत्वात् । कथमिदमवगम्यते तत्फलत्वम् ?; इति प्रकृतत्वात्—इत्थं प्रकृतत्वात् । विद्याकर्मणी हि प्रकृत्य तत्फलत्वेन गतिद्वयं प्रतिपाद्यते १"तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति"इति, २"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इति च । पापिनां विद्यारहितत्वेन ब्रह्मगमनाभाववत् पुण्यकर्मरहितत्वेन चन्द्रगमनमपि न सम्भवतीत्यर्थः ॥ १७ ॥

३"पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति पञ्चमाहुत्या देहारम्भश्रवणात् तस्याश्चन्द्रगमनपूर्वकत्वेन पापिनामपि देहारम्भाय चन्द्रगमनमवश्यम्भावीत्याशङ्क्याह—

**न तृतीये तथोपलब्धेः ॥** केवलपापकर्माणः - तृतीयस्थानम् ; न तृतीये स्थाने देहारम्भाय पञ्चमाहुत्यपेक्षाऽस्ति ; तथोपलब्धेः—४"वेत्थ यथा केनासौ लोको न सम्पूर्यते" इति द्युलोकस्याप्राप्तौ क इति प्रश्नस्य प्रतिवचने ५"अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्वम्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते"इति तृतीयस्य स्थानस्य द्युलोकाप्राप्तिश्रवणात् तस्य देहारम्भे पञ्चमाहुत्यनपेक्षत्वं ह्युपलभ्यते ॥ १८ ॥

**स्मर्यतेऽपि च लोके ॥** पुण्यकर्मणामपि केषाञ्चिद्द्रौपद्यादीनां देहारम्भे पञ्चमाहुत्यनपेक्षत्वं शिष्टलोकेऽपि च स्मर्यते ॥ १९ ॥

**दर्शनाच्च ॥** श्रुतावपि दृश्यते केषाञ्चिद्देहारम्भे पञ्चमाहुत्यनपेक्षत्वं—

१. छा. ५-१०-१॥—२. छा. ५-१०-३॥—३. छा. ५-९-१॥—४. छा. ५-३-३॥—५. छा. ५-१०-८ ॥

१"तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्" इति स्वेदजोद्भिज्जयोर्देहारम्भे पञ्चमाहुत्यनपेक्षत्वम् ॥ २० ॥

१"आण्डजं जीवजमुद्भिज्जम्" इत्यत्र स्वेदजस्य ग्रहणं न दृश्यत इत्याशङ्क्याह—

तृतीयशब्दावरोधस्संशोकजस्य ॥१"आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देन संशोकजस्य स्वेदजस्य अवरोधः सङ्ग्रह इत्यर्थः। अतः केवलपापकर्मणां चन्द्रारोहावरोहौ न सम्भवतः ॥ २१ ॥

इति वेदान्तदीपे अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

(श्रीशारीरकमीमांसाभाष्ये तत्स्वाभाव्यापत्त्यधिकरणम् ॥)

---

# तत्स्वाभाव्यापत्तिरुपपत्तेः । ३ । १ । २२ ॥

इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्तास्सानुशयाश्चन्द्रमसोऽवरोहन्तीत्युक्तम् ;अवरोहप्रकारश्च २ "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति वचनात् । "यथेतमनेवञ्च" इत्युक्तम् ; तत्रास्याकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः, उत * तत्सादृश्यापत्तिमात्रमिति विशये श्रद्धावस्थस्य सोमभाववदविशेषादाकाशादिभावः—

(सिद्धान्तः.)

इति प्राप्ते तत्स्वाभाव्यापत्तिरेवेत्युच्यते । तत्स्वाभाव्यापत्तिः—तत्सादृश्यापत्तिरित्यर्थः। कुत एतत्? उपपत्तेः-सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः; अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात्तद्भा-

---

१. छा. ६-३-१॥—२.छा.५-१०-५॥—* तत्सादृश्यमात्रम्, तत्स्वाभाव्यापत्तिमात्रम्. पा ॥

वानुपपत्तेस्तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ १"यथेतमाकाशम्" इत्यादिना आकाशसादृश्यापत्तिः प्रत्यवरोहत उपदिश्यते, तत्रतत्र सुखदुःखानुभवाभावोपपत्तेः । तदनुभवार्थं हि तत्तच्छरीरता ॥ २२ ॥

इति वेदान्तसारे तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ धूमादिना चन्द्रमसं प्राप्तस्य प्रत्यवरोहप्रकार आम्नायते १"यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति"इति। अत्राकाशादिभावः, किं देवमनुष्यादिभाववदाकाशादिशरीरत्वम्, उत तत्सादृश्यापत्तिरिति संशयः । आकाशादिशरीरत्वमिति पूर्वः पक्षः, श्रद्धावस्थस्य सोमराजभाववत् ; तत्र हि तच्छरीरत्वमेवोच्यते । राद्धान्तस्तु—आकाशादिप्राप्तौ सुखदुःखानुभवाभावान् तत्सादृश्यापत्तिरेव । सुखदुःखानुभवाय हि सोमादिशरीरत्वम्। सूत्रार्थस्तु—तत्स्वाभाव्यापत्तिः-आकाशादिसादृश्यापत्तिः, उपपत्तेः-सुखदुःखानुभवाभावोपपत्तेः ॥ २२ ॥

इति वेदान्तदीपे तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये नातिचिराधिकरणम् ॥ ७ ॥ )

---

## नातिचिरेण विशेषात् । ३ । १ । २३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उतानियम इति विशये नियमहेत्वभावादनियमः—

---

१. छा. ५-१०-५ ॥

(सिद्धान्तः)

इति प्राप्ते उच्यते—नातिचिरेण—इति। कुतः? विशेषात्—उत्तरत्र व्रीह्यादिप्राप्तौ १"अतो वै खलु दुर्निष्प्रपतरम्"इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात् पूर्वत्र ह्याकाशादिप्राप्तावचिरनिष्क्रमणं गम्यते।दुर्निष्प्रपतरमिति च्छान्दसस्तशब्दलोपः; दुर्निष्प्रपतरं—दुःखनिष्क्रमणतरमित्यर्थः॥

इति श्रीशारीरकमीमांसाभाष्ये नातिचिराधिकरणम् ॥ ५ ॥

---

वेदान्तसारे—नातिचिरेण विशेषात् ॥ व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति, १"अतो वै खलु दुर्निष्प्रपतरम्" इति व्रीह्यादावेव विशेषवचनात् ॥ २३ ॥

इति वेदान्तसारे नातिचिराधिकरणम् ॥ ५ ॥

---

वेदान्तदीपे—नातिचिरेण विशेषात् ॥ आकाशवायुधूमाभ्रमेघवर्षप्राप्तौ किं तत्रतत्र नातिचिरं तिष्ठति, उतानियम इति संशयः। अनियम इति पूर्वः पक्षः, नातिचिरेणेति विशेषवचनाभावात्। राद्धान्तस्तु—उत्तरत्र व्रीह्यादिभावे १"अतो वै खलु दुर्निष्प्रपतरम्"इति विशिष्य चिरेण गमनवचनं ततः प्राचीनेष्वचिरगमनं द्योतयतीत्याकाशादियावद्व्रीह्यादिभावप्राप्ति नातिचिरं तिष्ठति—इति। सूत्रमपि व्याख्यातम् ॥ २३ ॥

इति वेदान्तदीपे नातिचिराधिकरणम् ॥ ५ ॥

---

(श्रीशारीरकमीमांसाभाष्ये अन्याधिष्ठिताधिकरणम्॥६॥)

---

## अन्याधिष्ठिते पूर्ववदभिलापात् । ३ । १ । २४ ॥

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते १"मेघो

---

१. छा. ५-१०-६ ॥

भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान्व्रीह्यादीनाश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये [1] "जायन्ते" इति वचनाद्देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एव—

(सिद्धान्तः)

इति प्राप्त उच्यते—अन्याधिष्ठिते-इति। जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः? पूर्ववदभिलापात्--आकाशादिमेघपर्यन्तवत्केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतम्; तत्र तत्साधनभूतं कर्माभिलप्यते [1]"रमणीयचरणाः···कपूयचरणाः" इति । इह चाकाशादिवन्नाभिलप्यते कर्म, फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात्, अनारब्धस्य [1] "रमणीयचरणाः ...कपूयचरणाः" इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च। अत आकाशादिभाववचनवद्व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥ २४ ॥

## अशुद्धमितिचेन्न शब्दात् । ३ । १ । २५ ॥

नैतदस्ति—यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम्, भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्म—इति भोक्तृत्वहेतुसद्भावात् स्वर्गोपभोग्यफलमिष्टादिकर्मैवाशुद्धम्—पापमिश्रम्, अग्नीषोमीयादिहिंसायुक्तत्वात् । हिंसा च [2]"न हिंस्यात्सर्वा भूतानि" इति निषिद्धत्वात्पापमेव। नचात्र पदाहवनीयादिवदुत्सर्गापवादभावस्सम्भवति, भिन्नविषयत्वात् । अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति;[2]"न हिंस्यात्" इति तु हिंसायाः प्रत्यवायफलत्वम् । अथोच्येत—अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात्तस्येति;

१. छा. ५-१०-६,७ ॥—२ ॥

नैवम्, इहापि रागप्राप्तेरविशिष्टत्वात्। [१]"स्वर्गकामो यजेत" इत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशाद्यागादेः स्वर्गादिसाधनत्वमवगम्य फलराग एव यागादौ प्रवर्तते। अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते। लौकिक्यामपि हिंसायां केनचित्प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात्प्रवर्तत इति न कश्चन विशेषः। तथा नित्येष्वपि कर्मसु [२]"सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्" इत्यादिवचनात्फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम्। अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते। स्थावरभावं च पापफलं स्मरन्ति [३]"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति। अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्त इति चेत्—तन्न, कुतः? शब्दात्—अग्नीषोमीयादेस्संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्। पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति [४]"हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति" इत्यादिकम्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा; प्रत्युत रक्षणमेव। तथा च मन्त्रवर्णः [५]"न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिस्सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु" इति। चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः॥

## रेतस्सिग्योगोऽथ। ३। १। २६॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्, व्रीह्यादिभाववचनानन्तरं [६]"यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" इति रेतस्सिग्भावोऽ-

---

१. यजु. २-५-५॥— २. आपस्तम्ब. २-१-२-२॥—३. मनु. १-२-९॥—४॥—
५. यजु. २-का. ६-प्र. ९ अनु. ४९ प॥—६. छा. ५-१०-६॥

नुशयिनां श्रूयमाणो यथा तद्योगमात्रं प्रतिपादयति ; तद्वद्व्रीह्यादिभावोऽपीत्यर्थः ॥ २६ ॥

## योनेश्शरीरम् । ३ । १ । २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः, तत्रैव सुखदुःखोपभोगसद्भावात् । ततः प्रागाकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

वेदान्तसारे—अन्याधिष्ठिते पूर्ववदभिलापात् ॥ १"त इह व्रीहियवाः" इत्यादौ चान्यजीवाधिष्ठिते व्रीहियवादौ संश्लेषमात्रम्, अवरोहतः आकाशादिष्विव जननहेतुविरहिताभिलापात् । १"जायन्ते" इति वचनमौपचारिकम् । यत्र ब्राह्मणादिजन्मास्ति, तत्र १"रमणीयचरणाः" इति हि हेतुरभिलप्यते ॥ २४ ॥

अशुद्धमितिचेन्न शब्दात् ॥ अवरोहतः पूर्वानुष्ठितयागादिषु अग्नीषोमीयादिहिंसागर्भत्वेन अशुद्धं कर्मास्तीतिचेत्—न, २"हिरण्यशरीर ऊर्ध्वस्स्वर्गं लोकमेति' ३"न वा उ वेतन्म्रियसे न रिष्यसि" इति पशुसंज्ञपनस्याहिंसात्वशब्दात् ॥ २५ ॥

रेतस्सिग्योगोऽथ ॥ १"योयो ह्यन्नमत्ति यो रेतस्सिञ्चति" इति अन्नेन संसृष्टस्य रेतस्सिचा योगमात्रमनन्तरमुच्यते; अतः पूर्वमपि व्रीह्यादियोगमात्रम् ॥ २६ ॥

योनेश्शरीरम् ॥ योनिप्राप्तेः पश्चादेवावरोहता शरीरं प्राप्यते ॥ २७ ॥

इति वेदान्तसारे अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य
प्रथमः पादः ॥ १ ॥

---

१. छा. ५-१०-६, ७ ॥—२ ॥—३. यजु. ४-९-६-४६ ॥

वेदान्तदीपे—अन्याधिष्ठिते पूर्ववदभिलापात्॥ अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते १"मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति। ते किं व्रीह्यादिशरीरा जायन्ते, उतान्यैः क्षेत्रज्ञैर्व्रीह्यादिशरीरैरधिष्ठितान्व्रीह्यादीनाश्लिष्यन्तीति संशयः। १"जायन्ते" इति वचनाद्व्रीह्यादिशरीरभोक्तारो जायन्त एवेति पूर्वः पक्षः। राद्धान्तस्तु – व्रीह्यादिजन्महेतुभूतकर्मविशेषाश्रवणाद्व्रीह्यादिसंश्लेषमात्रमेव। १"जायन्ते" इति जन्मवचनमौपचारिकम्। ब्राह्मणादिशरीरभावे हि १"रमणीयचरणाः...कपूयचरणाः" इति जन्महेतुभूतं पुण्यपापरूपं कर्म श्रूयते। सूत्रार्थस्तु—अन्याधिष्ठिते—अन्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ, संश्लेषमात्रम्, कुतः? पूर्ववदभिलापात्—आकाशादिभाववत्केवलव्रीह्यादिभावाभिलापात्; जन्महेतुभूतकर्मानभिलापादित्यर्थः॥ २४॥

अशुद्धमितिचेन्न शब्दात्॥ यद्यपि व्रीह्यादिभावेन जायन्त इत्यत्र जन्महेतुभूतं कर्म न श्रुतम्; तथापि पूर्वश्रुतमिष्टादिकर्माग्नीषोमीयादिहिंसागर्भत्वेनाशुद्धम्। हिंसात्वेनाशुचिर्व्रीह्यादिजन्मनोऽपि हेतुर्भवतीति चेत्—न, अहिंसात्वशब्दात् पशोर्हि संज्ञपनस्य स्वर्गावाप्तिसाधनभाववादिशब्दः श्रूयते – २"हिरण्यशरीर ऊर्ध्वस्स्वर्गं लोकमेति" ३"न वा उ वेतन्म्रियसे न रिष्यसि" इत्यादिः॥ २५॥

रेतस्सिग्योगोऽथ॥ इतश्च व्रीह्यादिसंश्लेषमात्रम्, व्रीह्यादिभावानन्तरं रेतस्सिग्योगश्श्रूयते १"यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" इति। अत्र हि पुरुषसंश्लेषमात्रमेव श्रुतम्; एवमेव व्रीह्यादिभावेऽपीत्यर्थः॥

योनेश्शरीरम्॥ योनिप्राप्तेः पश्चादेवावरोहतो जीवस्य शरीरप्राप्तिः, तत्रैव सुखदुःखोपभोगात्। ततः प्रागाकाशादिषु तत्तत्संश्लेषमात्रमेवेत्यभिप्रायः॥ २७॥

इति वेदान्तदीपे अन्याधिष्ठिताधिकरणम्॥ ६॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे तृतीयस्याध्यायस्य प्रथमः पादः॥ १॥

---

१. छा. ५-१०-६,७॥—२॥—३. यजु. ४-९-६-४६॥



श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

( तृतीयाध्याये - द्वितीयः पादः-प्राणोत्पत्त्यधिकरणम् ॥)

## सन्ध्ये सृष्टिराह हि । ३ । २ । १ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्; इदानीमस्य स्वप्नावस्था परीक्ष्यते। स्वप्नमधिकृत्य श्रूयते [१]"न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथस्सृजते न तत्रानन्दा मुदः प्रमुदो भवन्ति अथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यस्सृजते स हि कर्ता" इति। तत्र संशयः—किमियं रथादिसृष्टिर्जीवेनैव क्रियते; आहोस्विदीश्वरेण—इति । किंयुक्तम् ? सन्ध्ये सृष्टिर्जीवेनेति। कुतः ? सन्ध्यं-स्वप्नस्थानमुच्यते, [२]"सन्ध्यं तृतीयं स्वप्नस्थानम्" इति वचनात्; सा तु जीवेनैव क्रियते [१]"सृजते स हि कर्ता" इत्याह हि । स्वप्नदृग्जीव एव तत्र प्रतीयते ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च । ३ । २ । २ ॥

किञ्च—एनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते [३]"य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति । पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते, नेच्छामात्रम्; पूर्वत्र हि [४]"स-

१. बृ. ६-३-१० ॥—२ ॥—३. कठ. २-५-८ ॥—४. कठ. १-१-२५ ॥

र्वान् कामाञ्छन्दतः प्रार्थयस्व" [1]"शतायुषः पुत्रपौत्रान् वृणीष्व" इति पुत्रादय एव कामाः प्रकृताः। अतो रथादीन् जीवः स्वप्ने सृजति; जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम्; अत उपकरणाद्यभावेऽपि सृष्टिरुपपद्यते ॥ २ ॥

—••◆( सिद्धान्तः )◆••—

इति प्राप्तेऽभिधीयते—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । ३ । २ । ३ ॥

तुशब्दः पक्षं व्यावर्तयति; स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषसृष्टमित्यर्थः । मायाशब्दो ह्याश्चर्यवाची [2]"जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिषु तथा दर्शनात् । अत्रापि [3]"न तत्र रथा न रथायोगा न पन्थानः"—सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः; [3]"अथ रथान्रथयोगान्पथः सृजते"-स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजत इत्याश्चर्यरूपत्वमेवाह । एवंविधाश्चर्यरूपा सृष्टिस्सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते, न जीवस्य; तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते। [4]"कामंकामं पुरुषो निर्मिमाणः" इति च परमपुरुषमेव निर्मातारमाह—[4]"य एषु सुप्तेषु जागर्ति" [4]"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः । [3]"अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति च तया श्रुत्यैकार्थ्यात्परमपुरुषमेव कर्तारमाह ॥ ३ ॥

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकम्, कुतस्तन्नाभिव्यज्यत इत्यत आह—

---

१.कठ १-१-२३ ॥२. श्रीरामायणे. बालकाण्डे. १-२७ ॥—३. बृ. ६-३-१० ॥—४. कठ. २-५-८ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ। ३ । २ । ४ ॥

तुशब्दश्शङ्काव्यावृत्त्यर्थः; पराभिध्यानात् — परमपुरुषसङ्कल्पात्, अस्य जीवस्य स्वाभाविकं रूपं तिरोहितम्; अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति; ततः तत्सङ्कल्पादेव हि अस्य-जीवस्य बन्धमोक्षौ श्रुतौ [१]"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" [१]"एष ह्येवानन्दयाति" [२]"भीषाऽस्माद्वातः पवते" इत्यादिषु ॥ ४ ॥

## देहयोगाद्वा सोऽपि । ३ । २ । ५ ॥

सोऽपि तिरोभावो देहयोगद्वारेण वा भवति, सूक्ष्माचिच्छक्तियोगद्वारेण वा; सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति, प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात् । अतोऽनभिव्यक्तस्वरूपत्वात्स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति । [३]"तस्मिँल्लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इति सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव सम्भवन्ति । अतो जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यानर्थानुत्पादयति ॥ ५ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः।३ । २ । ६ ॥

इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः; यतः स्वप्नोऽभ्युदयानभ्युदययोस्सूचकः श्रुतेरवगम्यते [४]"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" इति; [५]" अथ स्वप्ने

१. तै.आन. ७-२ ॥—२.तै.आन. ८-१ ॥—३.कठ. ५-८॥—४.छा.५-२-९॥- -५ ॥

स्वाभाविकं चेज्जीवस्य सत्यसङ्कल्पत्वादिकम्, कथं नाभिव्यज्यत इत्याशङ्क्याह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥** तुशब्दश्शङ्कानिवृत्त्यर्थः; परमपुरुषाभिध्यानादस्य स्वाभाविकं रूपमनादिकर्मप्रवाहेण कृतापराधतया तिरोहितम्; ततो ह्यस्य बन्धविपर्ययौ—ततः परमपुरुषसङ्कल्पादेव हि, अस्य—जीवस्य, बन्धविपर्ययौ—संसारमोक्षौ श्रूयेते—[१]"को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति" [२]"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादौ ॥ ४ ॥

तिरोधानप्रकारमाह—

**देहयोगाद्वा सोऽपि ॥** सोऽपि; तिरोधानभावः देहयोगाद्वा भवति; वाशब्दो विकल्पार्थः; व्यवस्थितश्च विकल्पः; देवमनुष्यादिदेहाकारपरिणताचिद्योगात्सृष्टिवेलायाम्, नामरूपविभागानर्हसूक्ष्मदशापन्नाचिद्योगेन प्रलयकाले ॥ ५ ॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥** इतश्च स्वाप्ना रथादयो न जीवसङ्कल्पकृताः; यतस्स्वप्नश्शुभाशुभयोस्सूचक इति श्रुतेरवगम्यते—[३]"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" [४]"अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तम्" इत्यादिषु । स्वप्नाध्यायविदश्चाचक्षते । जीवसङ्कल्पकृतत्वे हि सूचकत्वं न सम्भवति; स्वसङ्कल्पकृतत्वे हि शुभानामेव सूचकानर्थान् सृष्ट्वा तानेव पश्यति। अतस्स्वाप्नानामर्थानां परमपुरुष एव स्रष्टा ॥ ६ ॥

इति वेदान्तदीपे सन्ध्याधिकरणम् ॥ १ ॥

---

(श्रीशारीरकमीमांसाभाष्ये तदभावाधिकरणम् ॥ २ ॥)

---

# तदभावो नाडीषु तच्छ्रुतेरात्मनि च । ३ । २ । ७ ॥

**इदानीं सुषुप्तिस्थानं परीक्ष्यते; इदमाम्नायते [५]"यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति"**

---

१. तै.आन. ७-१ ॥—२. छा. ८-३-४॥—३. छा. ५-२-९ ॥—४॥—५.छा.८-६-३॥

इति ; तथा [1]"अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति; तथा—[2]"यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति" इति। एवं नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते; किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेः युगपदनेकस्थानवृत्त्यसम्भवाच्च विकल्पः—

(सिद्धान्तः)

इति प्राप्त उच्यते—तदभावः—इति। तदभावः-स्वप्नाभावः-सुषुप्तिः नाडीषु पुरीतत्यात्मनि च भवति, एषां स्थानानां समुच्चय इत्यर्थः। कुतः? तच्छ्रुतेः-त्रयाणां स्थानत्वश्रुतेः। न च कार्यभेदेन समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पो न्याय्यः। सम्भवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ; ब्रह्म तु पर्यङ्कस्थानीयम्। अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥ ७ ॥

## अतः प्रबोधोऽस्मात् । ३ । २ । ८ ॥

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्, अतः अस्मात्—ब्रह्मणः एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते—[3]"सत आगम्य न विदुः सत आगच्छामहे" इत्यादिषु ॥ ८ ॥

इति श्रीशारीरकमीमांसाभाष्ये तदभावाधिकरणम् ॥ २ ॥

---

वेदान्तसारे—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ स्वप्नाभावः सुषुप्तिः, [4]"आसु तदा नाडीषु सृप्तो भवति" [2]"सता सोम्य तदा सम्पन्नो भवति" इति श्रुतेः नाडीषु परमात्मनि[1]"पुरीतति शेते" इति श्रुतेः पुरीतति च; प्रासादखट्वापर्यङ्कवदविरोधः ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ [3]"सत आगम्य न विदुः" इति ब्रह्मणः प्रबोधश्रुतिः अत एव ॥ ८ ॥

इति वेदान्तसारे तदभावाधिकरणम् ॥ २ ॥

---

१. बृ. ४-१-१९ ॥—२. छा. ६-८-१ ॥—३. छा. ६-१०-२ ॥—४. छा. ८-६-३ ॥

वेदान्तदीपे—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ नाड्यः पुरीतत् ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते; किमेषां विकल्पः, उत समुच्चय इति संशयः । विकल्प इति पूर्वः पक्षः—१"आसु तदा नाडीषु सृप्तो भवति"२"ताभिः प्रत्यवसृप्य पुरीतति शेते" ३"सता सोम्य तदा सम्पन्नो भवति" इति त्रयाणां नैरपेक्ष्यप्रतीतेः । राद्धान्तस्तु—प्रासादखट्वापर्यङ्कवत् कार्यभेदेन समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पो न युक्त इति समुच्चयो न्याय्यः । तत्र पर्यङ्कस्थानीयं ब्रह्म, यतः पर्यङ्कवत्साक्षाद्ब्रह्म सुषुप्तिस्थानम् । सूत्रार्थस्तु—तदभावः स्वप्नाभावः; सुषुप्तिरित्यर्थः । सुषुप्तिः नाडीष्वात्मनि च; चकारात्पुरीततिच; तच्छ्रुतेः—त्रयाणां सुषुप्तिस्थानत्वश्रुतेः । उक्तेन न्यायेन समुच्चयो न्याय्य इत्यभिप्रायः ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ अस्मात् ब्रह्मणः प्रबोधश्रुतिरत एवोपपद्यते; ४"सत आगम्य न विदुस्सत आगच्छामहे" इति श्रूयते ॥ ८ ॥

इति वेदान्तदीपे तदभावाधिकरणम् ॥ २ ॥

---

(श्रीशारीरकमीमांसाभाष्ये कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥)

---

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ।३।२।९॥

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठति, उतान्य इति संशये अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसम्बन्धाभावादन्यः—

(सिद्धान्तः)

इति प्राप्त उच्यते—स एव तु-इति । तुशब्दः पक्षं व्यावर्तयति; स एवोत्तिष्ठति; कुतः? कर्मानुस्मृतिशब्दविधिभ्यः । कर्म तावत्—सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक्तेनैव भोक्तव्यम् । अनुस्मृतिरपि-य एवाहं सुप्तः, स एव प्रबुद्धोऽस्मीति । शब्दोऽपि-सुषुप्तप्रबुद्धस्सएवेति दर्शयति—४"त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति" इति । विधयश्च

---

१. छा. ८-६-३ ॥—२. बृ. ४-१-१९ ॥—३. छा. ६-८-१ ॥—४. छा. ६-१०-२ ॥

मोक्षार्थास्सुषुप्तस्य मुक्तत्वेऽनर्थकास्स्युः । नचासौ सर्वोपाधिविनिर्मुक्त आविर्भूतस्वरूपः–१"तद्यत्रैतत्सुषुप्तः" इति सुषुप्तं प्रकृत्य १"नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति वचनात् । मुक्तस्य च २"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ३"स तत्र पर्येति जक्षत्क्रीडन्नममाणः" ४"स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" ५"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति सर्वज्ञत्वादिः श्रूयते । अतस्सुषुप्तस्संसरन्नेव आयस्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परमात्मानमुपसम्पद्याश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ९ ॥

इति श्रीशारीरकमीमांसाभाष्ये कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ सता सम्पन्नोऽपि सुप्त एव प्रबुद्ध उत्तिष्ठति, ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात्, पूर्वानुभूतप्रत्यभिज्ञानात्, ६"त इह व्याघ्रो वा" इत्यादि—६"यद्यद्भवन्ति तथा भवन्ति" इति शब्दात्, मोक्षोपायविध्यानर्थक्याच्च ॥ ९ ॥

इति वेदान्तसारे कर्मानुस्मृतिशब्दाविध्याधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ किं सुषुप्त एव प्रबोधकाले उत्तिष्ठति ? स एव वा अन्यो वेत्यनियम इति संशयः । सुषुप्तस्य सर्वोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरसम्बन्धाभावात्स एवेति नियमो न सम्भवतीति पूर्वः पक्षः । सुषुप्तस्य ब्रह्मज्ञानाभावेन पूर्वकृतस्य कर्मणः तेनैवोपभोक्तव्यत्वात्, सोऽहमिति प्रत्यभिज्ञानात्, ७"त इह व्याघ्रो वा सिंहो वा" इत्यारभ्य ७"यद्यद्भवन्ति तथा भवन्ति" इति शब्दात्, मोक्षसाधनविध्यानर्थक्याच्च स एवोत्तिष्ठतीति राद्धान्तः । न चासौ शरीरेन्द्रियसम्बन्धविनिर्मुक्तः, अपि तु करणकलेबरप्रवर्तनायासादाश्वसाय ब्रह्मण्यपीतः पुनराश्वस्तः प्रवर्तनायोत्तिष्ठति । सूत्रमपि

---

१. छा. ८-११-२ ॥—२. छा. ८-३-४ ॥—३. छा. ८-१२-३॥—४.छा. ७-२५-२ ॥—५. छा. ७-२६-२ ॥—६. छा. ६-१०-२ ॥

ब्याख्यातम् ॥ ९ ॥

इति वेदान्तदीपे कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये मुग्धाधिकरणम् ॥ ४ ॥ )

---

## मुग्धेऽर्धसम्पत्तिः परिशेषात् । ३ । २ । १० ॥

मुग्धमधिकृत्य चिन्त्यते; किमियं मूर्च्छा सुषुप्त्यादिष्वन्यतमावस्था, उतावस्थान्तरमिति विशये सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छाप्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्था—

(सिद्धान्तः)

इति प्राप्त उच्यते—मुग्धेऽर्धसम्पत्तिः—इति । मुग्धे पुरुषे या तस्यावस्था, सा मरणायार्धसम्पत्तिः । कुतः? परिशेषात्—न तावत्स्वप्नजागरौ, ज्ञानाभावात्; निमित्तवैरूप्यादाकारवैरूप्याच्च न सुषुप्तिमरणे । निमित्तं हि मूर्च्छाया अभिघातादिः। पारिशेष्यान्मरणायार्धसम्पत्तिर्मूर्च्छा । मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः; सूक्ष्मप्राणदेहसम्बन्धावस्थितिर्मूर्च्छा ॥

इति श्रीशारीरकमीमांसाभाष्ये मुग्धाधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ मूर्च्छिते पुरुषे या, अवस्था, सा मरणायार्धसम्पत्तिरिति हेतुभेदात्, आकारभेदात्, अपुनरुत्थाननियमाभावाच्च ज्ञायते ॥ १० ॥

इति वेदान्तसारे मुग्धाधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ किं मूर्च्छा मरणादर्थान्तरम्, उत मरणमेवेति संशयः । सर्वेन्द्रियप्राणव्यापारोपरतेः मरणमेवेति पूर्वः पक्षः ।आकारवैरूप्येण सूक्ष्मप्राणास्तित्वावगतेः मरणायार्धसम्पत्तिरिति सिद्धान्तः । सूत्रार्थस्तु—मुग्धे मूर्च्छित पुरुषे याऽवस्था, सा मरणायाऽर्धसम्पत्तिः । कुतः? परिशेषात् । प्राणादिसर्वव्यापारोपरतेः न जागरा च

था, न च गतप्राणा, आकारवैलक्षण्येन सूक्ष्मप्राणास्तित्वावगतेः; मूर्च्छितस्यैव कस्यचित्पुनर्जीवन दर्शनाच्च न मरणमिति परिशेषान्मरणार्धसम्पत्तिरित्यवगम्यते ॥ १० ॥

इति वेदान्तदीपे मुग्धाधिकरणम् ॥ ४ ॥

(श्रीशारीरकमीमांसाभाष्ये उभयलिङ्गाधिकरणम् ॥ ५ ॥)

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ।३।२।११

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः, इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते । तत्र जागरस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषाः, ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्रतत्रावस्थितस्य सन्ति, नेति विचार्यते । किं युक्तम्? सन्तीति। कुतः? तत्तदवस्थशरीरेऽवस्थानात् । ननु [1]"सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" [2]"स्थित्यदनाभ्यांच" इत्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्तः,तत्कथमकर्मवश्यस्य परस्य ब्रह्मणस्तत्तत्स्थानसम्बन्धाद्दोष उच्यते; इत्थमुच्यते—कर्माण्यपि देहसम्बन्धमापादयन्त्यपुरुषार्थजननानि भवन्ति—इति [3]"देहयोगाद्वा" इत्यत्रोक्तम्; तच्च देहसम्बन्धस्यापुरुषार्थत्वेन भवति; इतरथा कर्माण्येव दुःखं जनयिष्यन्ति;किं देहसम्बन्धेन; अतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव; अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसम्बन्धोऽवर्जनीयः; पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव । अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म, तथापि [4]"यः पृथिव्यां तिष्ठन्" [4]"य आत्मनि तिष्ठन्" [4]"यश्चक्षुषि तिष्ठन्" [4]"यो रेतसि तिष्ठन्" इत्या-

१. शारी. १-२-८ ॥—२ शारी. १-३-६॥—३. शारी. ३-२-५ ॥—४. बृ. ५-७-३, २२, १८, २३ ॥

दिवचनात् तत्रतत्रावस्थितस्य तत्तत्सम्बन्धरूपापुरुषार्थास्सन्ति–इति ॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—न स्थानतोऽपि परस्य–इति । न पृथिव्यात्मादिस्थानतोऽपि परस्य ब्रह्मणः अपुरुषार्थगन्धस्सम्भवति । कुतः? उभयलिङ्गं सर्वत्र हि–यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उभयलिङ्गम् उभयलक्षणमभिधीयते, निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः । [1]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" [2]"समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः" [2]"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे" [3]"समस्तहेयरहितं विष्णाख्यं परमं पदम्" इत्यादिश्रुतिस्मृतिभ्यः उभयलक्षणं हि ब्रह्मावगतम् ॥ ११ ॥

# भेदादितिचेन्न प्रत्येकमतद्वचनात्। ३।२।१२।

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगः, तथाऽन्तर्यामिणः परस्यापि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगोऽवर्जनीय इति चेत्–तन्न, प्रत्येकमतद्वचनात्—[4]"यः पृथिव्यां तिष्ठन्" [4]"य आत्मनि तिष्ठन्" इत्यादिषु प्रतिपर्यायं [5]"स त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणोऽमृतत्ववचनेन तत्रतत्र स्वेच्छया नियमनं कुर्वतस्तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत्स्वरूपं तिरोहितमिति [6]"पराभिध्यानात्तु तिरोहितम्" इत्यत्रोक्तम् । ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसम्बन्धोऽवर्जनीय इत्युक्तम्; नैतद्युक्तम्, नह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपम्; कर्म-

१. छा. ८-१-५ ॥—२. वि. पु. ६-५-८४, ८५ ॥—३. वि. पु १-२२-५३ ॥ —४. बृ. ५-७-३, २२ ॥—५ बृ. ५-७-३, २३ ॥—६. शारी. ३-२-४॥

वश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति ; वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात् ; नचैवं दृश्यते; तथाचोक्तं–[1]"नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते । तस्माद्दुःखात्मकं नास्ति न च कंचित्सुखात्मकम्" इति । अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थस्स्यात्; परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात् ॥ १२ ॥

## अपिचैवमेके । ३ । २ । १३ ॥

अपिच एके-शाखिनः एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्वशब्देनाधीयते–[2]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥

अथ स्यात्–[3]"अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वंचास्ति, ततश्च [4]"ब्राह्मणो यजेत" इत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति; तत्राह—

## अरूपवदेव हि तत्प्रधानत्वात् । ३ । २ । १४ ॥

देवादिशरीरानुप्रवेशे तेन रूपेण युक्तमप्यरूपवदेव तत्-ब्रह्म-रूप-

१. वि. पु.२-६. ४६-४७-४८॥—२. मु. ३-१-१॥—३. छा. ६-३-२॥—४॥

रहिततुल्यमेव; जीववच्छरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इत्यर्थः। कुतः? निर्वाहकत्वेन प्रधानत्वात्। [1]"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति। ननु-तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसम्बन्धराहिततुल्यत्वमुच्यते? इत्थं—यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसम्बन्धः, तथा तदभावात्परस्यारूपवत्त्वम्। विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति; तस्मादरूपतुल्यमेव परं ब्रह्म। ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

ननु च [2]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते, अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं [3]"नेतिनेति" इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम्; तत्कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इति; अत आह—

## प्रकाशवच्चावैयर्थ्यात्। ३। २। १५॥

यथा [2]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यावैयर्थ्यात्प्रकाशस्वरूपत्वं ब्रह्मणोऽभ्युपगम्यते; तथा सत्यसङ्कल्पत्वसर्वज्ञत्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥ १५ ॥

## आह च तन्मात्रम्। ३। २। १६॥

किञ्च [2]"सत्यं ज्ञानमनन्तम्" इत्यादिवाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति, नान्यत्सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं निषेधति; [3]"नेतिनेति" इति च निषेधविषयोऽनन्तरमेव वक्ष्यते ॥

१. छा. ८-१४-१ ॥—२. तै. आन. १-१ ॥—३. बृ. ४-३-६ ॥

## दर्शयति चाथो अपि स्मर्यते । ३। २। १७॥

दर्शयति च वेदान्तगणः कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च १"तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः। न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"२"यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः" ३"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः" ३"स एको ब्रह्मण आनन्दः" ४"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति ५"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादि। स्मर्यते च ६"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" ७"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ८"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" ९"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" १०"सर्वज्ञस्सर्वकृत्सर्वशक्तिज्ञानबलर्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान्वशी। क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः। निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः"इत्यादिः। अतस्सर्वत्रावस्थितस्यापि ब्रह्मण उभयलिङ्गत्वात्तत्तत्स्थानप्रयुक्ता दोषा न परं ब्रह्म स्पृशन्ति ॥ १७ ॥

## अत एवचोपमा सूर्यकादिवत् । ३। २। १८॥

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत्परमात्मा

१. श्वे. ६-७, ८ ॥—२. मु. १-१-९ ॥—३. तै. आ. ८-४ ॥—४. तै. आ ९-१ ॥— ५. श्वे. ६-१९ ॥— ६. गी. १०-३ ॥— ७. गी. १०-४२ ॥— ८. गी. ९-१० ॥—९. गी. १५-१७ ॥—१०. वि. पु. ५-१-४७, ४८, ४९ ॥

तत्रतत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते—[1]"आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् । एक एव हि भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधाचैव दृश्यते जलचन्द्रवत्" इत्यादिषु ॥ १८ ॥

अत्र चोदयति—

## अम्बुवदग्रहणात्तु न तथात्वम् । ३ । २ । १९ ॥

तुशब्दश्चोद्यं द्योतयति । अम्बुवदिति सप्तम्यन्तात् वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते; न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते, न परमार्थतस्तत्रस्थाः । इह तु [2]"यः पृथिव्यां तिष्ठन्" [2]"योऽप्सु तिष्ठन्" [2]"य आत्मनि तिष्ठन्" इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अतस्सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गस्तत्रतत्र स्थित्यभावादेव । अतो न तथात्वं—दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥

परिहरति—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च । ३ । २ । २० ॥

पृथिव्यादिस्थानान्तर्भावात्स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते। कथमिदमवगम्यते? उभयसामञ्जस्यादेवम्—उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते। [1]"आकाशमेकंहि यथाघटादिषु पृथग्भवेत्" [1]"जलाधारेष्विवांशुमान्" इति दोषवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्या-

---

१. याज्ञवल्क्य. प्रायश्चित्त. अध्यात्मप्र. १४४ ॥—२. बृ-५-७-३, ४, २२ ॥

काशस्य, वस्तुतोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जसं भवति। घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक्पृथक्संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते; यथा च जलाधारेषु विषमेषु दृश्यमानोऽंशुमान् तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते; तथाऽयं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टस्सर्वत्र वर्तमानोऽप्येक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव। एतदुक्तं भवति —यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावाज्जलादिदोषानभिष्वङ्गः, तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसम्बन्धः—इति। दर्शनाच्च—दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद्दृष्टान्तोपादानं, सिंह इव माणवक इत्यादौ। अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसम्भवः ॥२०॥

अथ स्यात्—[1]"द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेवच" इति प्रकृत्य समस्तं स्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य [2]"तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः"इत्यादिना आकारविशेषं चाभिधाय [2]"अथात आदेशो नेतिनेति नह्येतस्मादितिनेत्यन्यत्परमस्ति" इति सर्वं प्रकृतं ब्रह्मणः प्रकारमितिशब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म; विशेषास्त्वेवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति ; अतः कथमुभयलिङ्गत्वं ब्रह्मण इति—अत्राह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।३।२।२१॥

---

१. बृ. ४-३-१ ॥—२. बृ. ४-३-६ ॥

नैतदुपपद्यते—यद्ब्रह्मणः प्रकृतविशेषवत्त्वं १"नेतिनेति" इति प्रतिषिध्यत—इति, तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धाः ; तथापि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव, इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाज्ञातम् । अतस्तेषामनुवादासम्भवादत्रैवोपदिश्यन्ते। अतस्तन्निषेधो नोपपद्यते । यस्मादेवं, तस्मात्प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये ब्रह्मणो विशेषाः प्रकृताः ; तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता १"नेतिनेति" इति प्रतिषिध्यते । नेतिनेति—नैवं नैवम् , उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म ; उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता ; साऽत्र इतिशब्देन परामृश्यत इत्यर्थः । यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति, अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति । ब्रवीति हि भूयो गुणजातं—१"न ह्येतस्मादितिनेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्यसत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति । अयमर्थः--इति नेति यद्ब्रह्म प्रतिपादितम् , तस्मादेतस्मादन्यद्वस्तु परं नह्यस्ति ; ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम् । तस्य च निर्वचनं १"प्राणा वै सत्यं तेषामेष सत्यम्" इति । प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते ; ते तावत्सत्यम् , वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात्;तेषामेष सत्यम्—तेभ्योऽप्येष परमपुरुषस्सत्यम् , जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते ; परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते; अतस्तेभ्योऽप्येष सत्यम्। अतश्चैवं वाक्यशेषोदितगुणजातयोगात् १"नेतिनेति" इति ब्रह्मणस्सवि-

१. बृ. ४-३-६ ॥—

शेषत्वं न प्रतिषिध्यते ; अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्ग-मेव परं ब्रह्म ॥ २१ ॥

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्तामूर्तादिरूपा-नुवादेन तन्निषेधासम्भवात्प्रकृतेयत्ताप्रतिषेध उक्तः ; तदेव प्रमाणान्त-रागोचरत्वं द्रढयति—

## तदव्यक्तमाह हि । ३ । २ । २२ ॥

तत्—ब्रह्म प्रमाणान्तरेण न व्यज्यते, आह हि शास्त्रं [१]"न सन्दृशे तिष्ठाति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" [२]"न चक्षुषा गृह्यते नापि वाचा" इत्यादि ॥

हेत्वन्तरं चाह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् । ३ । २ । २३ ॥

अपि च संराधने—सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारः ; नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते । [३]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" [२]"ज्ञानप्रसादेन विशुद्धसत्त्व-स्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रुतिः । स्मृतिरपि [४]"नाहं वेदैर्न तपसा न दानेन न चेज्यया" [४]"भक्त्या त्वनन्यया श-क्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति । भक्तिरूपापन्नमेवोपासनं संराधनम्—तस्य प्रीणनमिति पूर्वमेवोक्तम्। अ-तो निदिध्यासनाय ब्रह्मस्वरूपमुपादिशत् [५]"द्वे वाव ब्रह्मणः" इत्यादि-

---

१. तै. नारा. १. अनु. १० ॥—२. मु. ३-१ ८ ॥—३. मु. ३-२-३ ॥—४. गी. ११-५३, ५४ ॥—५. बृ. ४-३-१ ॥

शास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥ २३ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । ३ । २ । २४ ॥

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति ; न मूर्तामूर्तादिविशिष्टत्वम् ; यतस्साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवत्–ज्ञानानन्दादिस्वरूपवन्मूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते–[१]"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादि । ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके कर्मण्यभ्यासादुपलभ्यते । तद्वच्चाभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः ॥ २४ ॥

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति—

## अतोऽनन्तेन तथाहि लिङ्गम् । ३ । २ । २५ ॥

अतः—उक्तैर्हेतुभिर्ब्रह्मणः अनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम् । तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥ २५ ॥

इति श्रीशारीरकमीमांसाभाष्ये उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

वेदान्तसारे—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ जागरादिषु चतसृष्ववस्थास्वन्तर्यामित्वेन स्थितेरपि परस्य ब्रह्मणो न कश्चन दोषः ; यतस्सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषसम्बन्धत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिङ्गं परं ब्रह्म श्रुतम्—[२]"अपहतपाप्मा...सत्यसङ्कल्पः" [३]"निरवद्यम्" [४]"यस्सर्वज्ञस्सर्ववित्" [५]"समस्तकल्याणगुणात्मकोऽसौ" [६]"सकला न यत्र क्लेशादयः" इत्यादिषु ॥ ११ ॥

---

१. बृ. ३-४-१०॥—२. छा. ८-१-५ ॥—३. श्वे. ६-१९ ॥—४. मु. १-१-९॥—५, ६. वि. पु. ६-५-८४, ८५ ॥

**भेदादिति चेन्न प्रत्येकमतद्वचनात्** ॥ जीवस्य स्वतोऽपहतपाप्मनोऽपि शरीरसम्बन्धित्वावस्थाभेदाद्यथा दोषसम्बन्धः, तथा परस्यापि १"यस्य पृथिवी शरीरम्" इत्यादिशरीरसम्बन्धित्वाद्दोष इति चेत्—न, १"यस्य पृथिवी शरीरम्" इत्यादिषु प्रतिपर्यायं २"स त आत्माऽन्तर्याम्यमृतः" इति निर्दोषत्ववचनात् ॥ १२ ॥

**अपि चैवमेके** ॥ एकस्मिन् शरीरेऽवस्थितयोर्जीवपरयोर्यो विशेष उक्तः, एवमेके स्वशब्देनाधीयते—३"द्वा सुपर्णा" इत्यारभ्य, ३"पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति ॥ १३ ॥

**अरूपवदेव हि तत्प्रधानत्वात्**॥ मनुष्यादिशरीरेषु शरीरित्वेऽपि रूपरहितवस्तुवदेव वर्तते तत् ब्रह्म, जीवनामरूपयोरपि निर्वोढृत्वेन प्रधानत्वात् । तथाहि श्रुतिः, ४"नामरूपयोर्निर्वहिता ते यदन्तरा" इति नामरूपयोरन्तरा अस्पृष्टो मध्ये वर्तते, अवश्य इत्यर्थः ॥ १४ ॥

**प्रकाशवच्चावैयर्थ्यात्** ॥ यथा ५"सत्यं ज्ञानम्" इति वाक्यावैयर्थ्यात् स्वप्रकाशतया ज्ञानस्वरूपं ब्रह्म ; तथा ६"निरवद्यम्" ७"यस्सर्वज्ञः" ८"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिपरश्शतवाक्यावैयर्थ्यात् निरवद्यं कल्याणगुणाकरञ्चेत्युभयलिङ्गमेव ॥ १५ ॥

**आह च तन्मात्रम्** ॥ ५"सत्यं ज्ञानम्" इति ज्ञानस्वरूपतामात्रमाह, नान्यन्निवारयति, अविशेषात्, विरोधाभावाच्च ॥ १६ ॥

**दर्शयति चाथो अपि स्मर्यते** ॥ दर्शयति च निर्दोषत्वं कल्याणगुणाकरत्वञ्च वेदान्तगणः ६"निष्कलं निष्क्रियं शान्तम्" ९"तमीश्वराणाम्" इत्यादिः ; १०"यो मामजमनादिम्" इत्यादिना स्मर्यते च तत् ॥ १७ ॥

**अत एवचोपमा सूर्यकादिवत्** ॥ यतः पृथिव्यादौ सर्वत्र स्थितस्यापि निर्दोषत्वं कल्याणगुणाकरत्वञ्च ; अत एव शास्त्रेषु जलसूर्यकादिवदित्युपमा ११"आकाशमेकं हि यथा ..जलाधारेष्विवांशुमान्" इति ॥ १८ ॥

चोदयति—

१ बृ.५-७-३॥—२. बृ. ५-७.३...२३॥—३.मु-३.१-१॥ —४.छा.८-१४-१॥—५. तै. आ. १-१॥—६. श्वे. ६-१९ ॥—७. मु. १-१-९॥—८. श्वे.६-८॥—९. श्वे. ६-७ ॥—१०. गी. १०-३ ॥—११याज्ञवल्क्य. प्रायश्चित्त. अध्यात्म प्र. १४४ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ अम्बुनि सूर्यो यथा गृह्यते, न तथा परमात्मा पृथिव्यादौ ; अत्र परमार्थतस्स्थितः; अतो न निर्दोषत्वमिति ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ नेति वर्तते । नैवम्, पृथिव्यादिष्वन्तर्भावात् परस्य तद्गतवृद्धिह्रासभाक्त्वं दृष्टान्तेन निवर्त्यते इत्युभयदृष्टान्तोपादानसामञ्जस्यादवगम्यते । १"आकाशमेकं हि यथा" इति वस्तुतस्स्थितमाकाशं, वस्तुतोऽनवस्थितञ्च सूर्यकमुभयमुपादत्ते । अनवस्थितस्य यथा न दोषस्पर्शः ; तथा स्थितस्यापि हेत्वभावादिति ज्ञापयितुम् । विवक्षितधर्मसाम्यज्ञापनाय सिंह इवेति दृष्टान्तो दृश्यते । अथवा दर्शनाच्चेति, २"अश्व इव रोमाणि विधूय पापम्" इत्यादौ विवक्षितसाम्यान्वयो दार्ष्टान्तिके हि दृश्यते । अश्वो हि रोमाणि सहजानि स्वावयवभूतानि मूर्तद्रव्याणि स्वशरीरं कम्पयन् कानिचिन्मुञ्चति ; आत्मा तु स्वेन कदाचिदनुष्ठितानि क्षणध्वंसितया विनष्टानि कर्माणि भगवदप्रीतिकराणीति भगवता स्वाप्रीतिकृतदुःखानि दातुं प्रवृत्तेन उपासनप्रीतिकृतानुग्रहान्निवर्तितानीति तत्सम्पर्काभावमनुसन्दधाति ॥ २० ॥

३"अथात आदेशो नेति नेति" इति सकलविशेषप्रतिषेधान्नोभयलिङ्गमित्यत आह—

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ ४"द्वे वाव ब्रह्मणो रूपे" इत्यारभ्य, कृत्स्नप्रपञ्चस्य ब्रह्मणो रूपत्वेनाप्रज्ञातस्य रूपत्वमुपदिश्य, पुनस्तस्यैव प्रतिषेधासम्भवात् प्रकृतैतावन्मात्रन्न भवति; ब्रह्मेति ब्रह्मणः प्रकृतेयत्तां ३"नेति नेति" इति प्रतिषेधति ; ततः पश्चात् पूर्वमनुक्तं गुणगणं ब्रवीति च—३"नह्येतस्मादितिनेत्यन्यत्परमस्ति" इति । इति नेति निर्दिष्टाद्ब्रह्मणोऽन्यन्न ह्यस्ति[illegible] ; ३"अथ नामधेयं सत्यस्य सत्यम्" इति च । तन्निर्वचनम् ३"प्राणा वै सत्यं तेषामेष सत्यम्" इति। प्राणाः—जीवात्मानः वियदादिवदुत्पत्त्यभावात्सत्यम् ; तेभ्योऽप्येष सत्यं, ज्ञानसङ्कोचाद्यभावात्। अतः प्रकृतेयत्ताप्रतिषेधादुभयलिङ्गमेव ॥ २१ ॥

प्रत्यक्षेण सन्मात्रं ब्रह्मैव गृह्यते, अन्यत्सर्वं भ्रान्तमिति, ३"नेति नेति" इति निषेधार्थ इत्यत आह—

तदव्यक्तमाह हि ॥ ब्रह्मस्वरूपं न केनापि प्रमाणेन व्यज्यते ; तथा

---

१. याज्ञवल्क्य. प्रायश्चित्त. अध्यात्मप्र. १४४ ॥—२. छा. ८-१३-१ ॥ —३. बृ. ४-३-६ ॥—४. बृ. ४-३-१ ॥

ऽऽह हि श्रुतिगणः, १"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनै-नम्" इत्यादिः । प्रत्यक्षादिना तु पटादेरेवास्तित्वं गृह्यते; न ब्रह्मणः ॥ २२ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ *अपिचात्यर्थप्रियानुध्यान-रूपसम्यक्प्रीणने सति ब्रह्मस्वरूपं गृह्यत इति श्रुतिस्मृतिभ्यामवगम्यते। २"ना-यमात्मा प्रवचनेन लभ्यः" इति श्रुतिः । ३"नाहं वेदैः" इत्यादिस्मृतिः॥ २३॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥ संराधनकर्मण्य-भ्यासात् येषां ब्रह्मस्वरूपदर्शनं जातम्; तद्दर्शने ज्ञानानन्दादेरिव जगदैश्वर्य-स्यावैशेष्यं प्रतीयते ४"अहं मनुरभवं सूर्यश्च" इत्यादौ ॥ २४ ॥

अतोऽनन्तेन तथाहि लिङ्गम् ॥ अतः ५"द्वे वाव ब्रह्मणो रूपे" इ-त्यादिनोपदिष्टेनानन्तेन कल्याणगुणगणेन योगो ब्रह्मणस्सिद्धः । तथा सत्युभय-लिङ्गमेव ब्रह्म ॥ २५ ॥

इति वेदान्तसारे उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

वेदान्तदीपे—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ किं जीवस्येव तदन्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिस्थानप्रयुक्तदोषास्सम्भव-न्ति, उत नेति संशयः । ६"यः पृथिव्यां तिष्ठन्" ६"य आत्मनि तिष्ठन्" ६"यश्चक्षुषि तिष्ठन्" ६"यो रेतसि तिष्ठन्" इत्यादिना जीवस्येव सर्वावस्था-स्ववस्थितिवचनात् छन्दतोऽपि पूयशोणितादिमज्जनमपुरुषार्थ एवेति सर्वे दो-षास्सम्भवन्तीति पूर्वः पक्षः । राद्धान्तस्तु—७"अपहतपाप्मा विजरः" ८"निरवद्यं निरञ्जनम्" ७"सत्यकामस्सत्यसङ्कल्पः" ९"यस्सर्वज्ञस्सर्ववित्" १०"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" ११"परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे"इत्यादिश्रुतिस्मृतिभ्यो निरस्तनिखिलदोषगन्ध-तासार्वज्ञ्यसत्यसङ्कल्पत्वाद्युभयलक्षणस्वरूपावगतेः परस्य ब्रह्मणस्सर्वत्रान्तर्या-मितयाऽवस्थितस्यापि न दोषगन्धस्सम्भवति ; अपि तु सर्वनियमनरूपलीला-रस एव ॥

सूत्रार्थस्तु—न स्थानतोऽपि परस्य—पृथिव्यात्मादिष्वन्तर्यामितयाऽव-

---

१. तै. ना. अम्भस्य ॥—२. मु. ३-२-३॥—३. गी. ११-५४॥—४. बृ. ३-४-१० ॥ ५. बृ. ४-३-१॥—६. बृ. ५-७-३-२२,१८,२३॥—७. छा. ८-१-५॥—८.श्वे. ६-१९॥ ९.मु.१-१-९॥—१०. गी-१०-३॥—११. वि.पु.६-५-८५॥*अपि अपिचेत्यर्थः। प्रियानु.पा॥

स्थितस्यापि परस्य ब्रह्मणः जीवस्य तत्रतत्रावस्थितस्य ये दोषा उक्ताः, ते न सम्भवन्ति ; कुतः ? उभयलिङ्गं सर्वत्र—हि हेतौ, यतस्सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषत्वसमस्तकल्याणगुणात्मकत्वरूपोभयलिङ्गम् उभयलक्षणं परं ब्रह्मावगतम् ॥ ११ ॥

**भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥** यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणकस्यापि देवादिशरीरसम्बन्धितयाऽवस्थाभेदादुक्तदोषसम्बन्धित्वम् ; एवं परस्यापि १"यस्य पृथिवी शरीरम्" इति शरीरसम्बन्धित्वावस्थाभेदात्ते दोषास्स्युरिति चेत्—न,प्रत्येकं-प्रतिपर्यायम् , अतद्वचनात् - दोषासम्बन्धित्ववचनात् । १"यस्य पृथिवी शरीरम्" इत्यादिषु १"एष त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते ; जीवस्य तु पराभिध्यानात्तत्स्वरूपं तिरोहितमित्युक्तम् । अतश्शरीरसम्बन्धित्वेऽपि परस्यैते न दोषाः ॥ १२ ॥

**अपिचैवमेके ॥** अपि च यदिदं जीवपरयोरेकस्मिन् शरीरे शरीरित्वेनावस्थितयोर्दोषसम्बन्धित्वं तद्विपरीतत्वं चोक्तम् , एवमेके शाखिनस्स्वशब्देनाधीयते—२"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥ १३ ॥

मनुष्यादिशरीरेषु शरीरित्वमेव जीवस्य नामरूपभाक्त्वेन कर्मवश्यताहेतुः, तत्परस्याप्यविशिष्टं चेत्—कथं परस्य ब्रह्मणोऽकर्मवश्यत्वेन कर्मफलानशनमुच्यते—इत्यत आह—

**अरूपवदेव हि तत्प्रधानत्वात् ॥** मनुष्यादिशरीरेषु शरीरित्वेऽप्यरूपवदेव हि तत् परं ब्रह्म ; कुतः ? प्रधानत्वात् निर्वाहकत्वात् ; जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुं परस्य तत्तच्छरीरे शरीरित्वेनावस्थानम् ; यथाह—१"यस्य पृथिवी शरीरम्" ३"यस्याऽत्मा शरीरम्...आत्मानमन्तरो यमयति" ४"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" "५आकाशो हवै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति । अत उभयलिङ्गमेव परं ब्रह्म ॥१४॥

६"सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रकाशैकस्वरूपता ब्रह्मण उच्यते, कथमुभयलिङ्गत्वमित्यत आह—

---

१. बृ. १-७-३-२२, १८, २३, ॥—२. मु. ३-१-१ ॥ —३. बृ. ५-७-२२॥—४. आरणम्. ३-प्र. २१-पं ॥—५. छा. ८-१४-१ ॥—६. तै. आ. १-१ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ यथा [1]"सत्यं ज्ञानम्" इति वाक्यावैयर्थ्यात्प्रकाशो ब्रह्मणस्स्वरूपमित्यवगम्यते; तथा [2]"यस्सर्वज्ञस्सर्ववित्" [3]"पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिवाक्यावैयर्थ्यात्कल्याणगुणाकरत्वं च ब्रह्मणस्स्वरूपमित्यवगम्यते इत्युभयलिङ्गमेव ॥ १५ ॥

आह च तन्मात्रम् ॥ [1]"सत्यं ज्ञानम्" इति वाक्यं ब्रह्मणो ज्ञानं स्वरूपमित्येतावन्मात्रमाह; न पुनः कल्याणगुणाकरत्वं निषेधति ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ दर्शयति च वेदान्तवाक्यगणो निरस्तनिखिलदोषत्वं कल्याणगुणाकरत्वं च [4]"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" [5]"तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्" इत्यादिकः। स्मर्यते च [6]"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" [7]"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्" इत्यादिषु॥ १७॥

अत एव चोपमा सूर्यकादिवत्॥ यतो ब्रह्मणो निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वेनोभयलिङ्गत्वात् पृथिव्यादिस्थानतोऽपि न तत्तत्प्रयुक्तदोषगन्धसम्भवः; अत एव शास्त्रेषु च जलसूर्यकाद्युपमा क्रियते [8]"आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इत्यादिषु ॥ १८ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ तुशब्दश्चोद्यं द्योतयति; अम्बुनीवाग्रहणात्; यथाऽम्बुनि सूर्यः तत्रानवस्थित एव भ्रान्त्या तत्र स्थित इव गृह्यते; न तथा परमात्मा पृथिव्यादौ गृह्यते; [9]"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इति परमार्थतस्स्थितो गृह्यते; अतो न तथात्वं—न सूर्यस्येव तत्प्रयुक्तदोषगन्धाभावः परमात्मनः, परमार्थतस्स्थतत्वात् ॥ १९ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ पृथिव्यादिषु विषमेषु स्थानेषु स्थितस्यापि परमात्मन तदन्तर्भावात्—तत्रावस्थानतः तत्प्रयुक्तवृद्धिह्रासभाक्त्वं [8]"जलाधारेष्विवांशुमान्" इति दृष्टान्तेन निवर्त्यते। कुतोऽवगम्यते एतावन्मात्रमिति; उभयसामञ्जस्यादेवम्—उभयदृष्टान्तोपादानसामञ्जस्यादेवमवगम्यते। [8]"आकाशमेकं हि यथा घटादिषु पृथग्भवेत्" इति

१. तै. आ. १-१- ॥—२. मु. १-१-९ ॥—३. श्वे. ६-८ ॥—४. श्वे. ६-१९॥—५. श्वे. ६-७ ॥—६. गी. १०-३ ॥—७. गी. ७-६॥—८. याज्ञवल्क्य. प्रायश्चित्त. अध्यात्मप्र. १४४ ॥—९. बृ. ५-७-३ ॥

घटकरकादिषु विषमेष्ववस्थितमाकाशं, १"जलाधारेष्विवांशुमान्" इति चांशुमन्तं परमार्थतस्स्थितमनवस्थितं चोभयं दृष्टान्ततयोपादाय १"तथाऽऽत्मैको ह्यनेकस्थः" इति निगमनात् तत्तत्स्थानप्रयुक्तवृद्धिह्रासभाक्त्वनिवर्तनमात्रं विवक्षितमित्यवगम्यते। अन्यत्रापि दृष्टान्तदार्ष्टान्तिकयोस्सर्वसाम्याभावेऽपि 'सिंह इव माणवकः" इत्यादिषु दृष्टान्तोपादानदर्शनाच्चैवमवगम्यते ॥ २० ॥

२"अथात आदेशो नेतिनेति" इत्यादिना पूर्वप्रकृतस्य मूर्तामूर्तप्रपञ्चस्य ब्रह्मणो रूपत्वप्रतिषेधान्निष्प्रपञ्चं सन्मात्रमेव ब्रह्म ; न पुनरुक्तस्वरूपमुभयलिङ्गमित्याशङ्क्याह—

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीतिच भूयः॥** हीति - हेतौ । ३"द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेवच" इत्यादिना स्थूलस्य सूक्ष्मस्य च प्रपञ्चस्य ब्रह्मणो रूपतया प्रमाणान्तराप्रज्ञातस्य अत्रैव रूपतयोपदिष्टस्य निषेधासम्भवात् प्रकृतैतावत्त्वं हि ब्रह्मणः प्रतिषेधति, पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेतिहि ४"अथात आदेशो नेतिनेति" इत्यत्र प्रतिपाद्यत इत्यर्थः । ततो ब्रवीति च भूयः—ततः-पूर्वोक्ताद्भूयस्त्वं ब्रवीति च वाक्यशेषः, ४"नह्येतस्मादितिनेत्यन्यत्परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति—इति नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यन्नह्यस्ति; परब्रह्मणोऽन्यत्स्वरूपतो गुणतश्चोत्कृष्टं न ह्यस्तीत्यर्थः । ४"सत्यस्य सत्यम्" इति ब्रह्मणो नामधेयम् , तस्य निर्वचनम्—४"प्राणा वै सत्यं तेषामेष सत्यम्" इति । प्राणसाहचर्याज्जीवात्मानः प्राणाः । ते हि वियदादिवदनुत्पाद्यत्वेन सत्यम् । तेभ्योऽप्येष सत्यम्,ते हि कर्मानुगुणदेहयोगेन जन्मवन्तः; तदप्यस्य नास्तीति तेषामेष सत्यम् , ज्ञानसङ्कोचविकासरूपविकारस्याप्यसम्भवात् । अतः प्रमाणान्तराप्रज्ञातस्वरूपस्य ब्रह्मणो मूर्तामूर्तप्रपञ्चप्रकारतयोपदेशात् ,पुनरपि प्रकारविशेषोपदेशाच्च, ४"अथात आदेशो नेतिनेति" इति पूर्वप्रकृतेयत्ता ब्रह्मणः प्रतिषिध्यत इत्यर्थः ॥ २१ ॥

ननु च वस्तुतः प्रत्यक्षेण निर्विशेषसन्मात्रमेव गृह्यते;तदतिरिक्तं भ्रान्त्या प्रतीयमानं सविशेषरूपमनूद्य ५"नेतिनेति" इति निषिध्यत इत्यत्राह—

**तदव्यक्तमाह हि ॥** ब्रह्मणः प्रमाणान्तराप्रज्ञाततां द्रढयति; तत् ब्रह्म न केनापि प्रमाणेन व्यक्तम् ; तथा आह हि श्रुतिः—६"न संदृशे तिष्ठति रूप-

१. याज्ञवल्क्य. प्रायश्चित्त. अध्यात्म. १४४ ॥—२. बृ. ४-३-६ ॥—३. बृ. ४-३-१ ॥—४. बृ. ४-३-६ ॥—५. तै. ना. अम्भस्. ३ ॥

मस्य” इत्यादिका ॥ २२ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ अपिच संराधन एवोपलभ्यते; संराधनं सम्यक्प्रीतियुक्तं भजनम्, उपासनमिति यावत्। उपासनरूपतत्प्रीणनेन विना केनापि नोपलभ्यत इति श्रुतिस्मृतिभ्यामवगम्यते। [1]“नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः” [2]“नाहं वेदैर्न तपसा न दानेन न चेज्यया... भक्त्या त्वनन्यया शक्यः” इति हि श्रुतिस्मृती। अतः केनापि प्रमाणेनानभिव्यक्तस्वरूपत्वाद्ब्रह्मणः [3]“द्वे वाव ब्रह्मणो रूपे” इत्यादिना ब्रह्मणः प्रकारतयोपदिष्टं जगदैश्वर्यं [4]‘नेतिनेति” इति न निषिध्यते; किन्तु प्रकृतेयत्तामात्रं तु निषिध्यते ॥ २३ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ इतश्च ज्ञानानन्दवज्जगदैश्वर्यमपि ब्रह्मणो रूपम्; येषां वामदेवादीनां संराधनरूपकर्मण्यभ्यासात्प्रकाशश्च सञ्जातः—दर्शनं सञ्जातम्; तेषां दर्शने प्रकाशादिवत् ज्ञानादेरिव जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते, [5]“तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च” [6]“अहं कक्षीवान्” इत्यादौ ॥ २४ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ अतोऽनन्तेन कल्याणगुणगणेन योगो ब्रह्मणस्सिद्धः। तथा सत्युभयलिङ्गमेव ब्रह्म ॥ २५ ॥

इति वेदान्तदीपे उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

···◆(श्रीशारीरकमीमांसाभाष्ये अहिकुण्डलाधिकरणम् ॥ ६ ॥)◆···

---

## उभयव्यपदेशात्त्वहिकुण्डलवत् ।३।२।२६॥

मूर्तामूर्तात्मकस्य अचित्प्रपञ्चस्य ब्रह्मणो रूपत्वं[3]“द्वे वाव ब्रह्मणो रूपे” इत्यादिनोपदिश्यते। [4]“अथात आदेशो नेतिनेति” इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते। [4]“नह्येतस्मादितिनेत्यन्यत्परमस्ति” इति ब्रह्मणोऽन्यदुत्कृष्टं नह्यस्तीति प्रतिपादितम्। तदुपपादनाय

---

१. ३. कठ. २-२३ ॥—२. गी. १३-५३, ५४॥—३. बृ. ४-३-१-६॥—४. बृ. ४-३-६ ॥—५. बृ. ३-४-१०॥—६ ॥

१"अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्"इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तम्।तथा२"प्रधानक्षेत्रज्ञपतिर्गुणेशः"३"पतिं विश्वस्याऽऽत्मेश्वरं" ४ "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुतेश्चायमर्थोऽवगम्यते। तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते, ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्–किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन,उत प्रभाप्रभावतोरिवैकजातियोगेन,उत जीवस्येव विशेषणविशेष्यतयांशांशिभावेन–इति। इह स्थाप्यमानं विशेषणविशेष्यभावमङ्गीकृत्य ५"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" ६"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्वस्तुविशिष्टस्योत्पत्तिरनन्यत्वं चोक्तम्। किं युक्तम्? अहिकुण्डलवदिति; कुतः?उभयव्यपदेशात् ७"ब्रह्मैवेदं सर्वम्" ८"आत्मैवेदं सर्वम्" इति तादात्म्यव्यपदेशात्, ९"हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इत्यादिभेदव्यपदेशाच्च। अहेः कुण्डलभाव*ऋजुभाववत् तस्यैव ब्रह्मणस्संस्थानविशेषा एवाचिद्वस्तूनि॥

## प्रकाशाश्रयवद्वा तेजस्त्वात्। ३। २। २७॥

वाशब्दः पक्षव्यावृत्त्यर्थः; ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः; अतो यथा तेजस्त्वेन प्रभातदाश्रययोरपि तादात्म्यम्; एवमचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः॥ २७॥

## पूर्ववद्वा। ३। २। २८॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः; एकस्यैव द्रव्यस्यावस्थाविशेषयोगे

१ बृ. ४-३-६॥—२. श्वे. ६-१६॥—३. तै. ना. ३-अनु॥—४. श्वे. ६-१३॥—५. शारी. १-४-२३॥—६. शारी. २-१-१५॥—७. बृ. ४-५-१॥—८. छा. ७-२५-२॥—९. छा. ६-३-२॥—* रज्जु. पा॥

ब्रह्मस्वरूपस्यैवाचिद्रूप्यरूपत्वादुक्तदोषादनिर्मोक्षः । अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रम्; एवं तर्ह्यश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः। पूर्ववदेव[1] "अंशो नानाव्यपदेशात्"[2] "प्रकाशादिवत्तु नैवं परः" इति जीववत्पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम्; विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः, ब्रह्मणो निर्दोषत्वं च रक्षितम् । तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रत्यपृथक्सिद्धिलक्षणविशेषणतया यथांशत्वम्; तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम्॥२८

## प्रतिषेधाच्च । ३। २। २९॥

[3] "स वा एष महानज आत्माऽजरोऽमरः[4] "नास्य जरयैतज्जीर्यति" इत्यादिभिः ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः । अतस्सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वम्, कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्; ब्रह्मणो निर्दोषत्वं च रक्षितम् । ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेनचोभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥

इति श्रीशारीरकमीमांसाभाष्ये अहिकुण्डलाधिकरणम् ॥ ६ ॥

---

वेदान्तसारे—उभयव्यपदेशात्त्वहिकुण्डलवत्॥[5] "आत्मैवेदं सर्वम्" [6] "अस्मान्मायी सृजते" इत्येकत्वनानात्वव्यपदेशात् अहेः कुण्डलभावादिवत् ब्रह्मस्वरूपस्यैव [7] "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोक्तः पृथिव्यादिभावः ॥२६ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि

---

१. शारी. २-३-४२ ॥—२. शारी. २-३-४५॥—३ बृ.६-४ २५॥—४.छा.८-१-५॥—५. छा. ७-२५-२ ॥—६. श्वे. ४-९ ॥—७. बृ. ३-३-१ ॥

तेजस्त्वयोगेन ऐक्यम्; एवमचिद्ब्रह्मणो*श्चैकजातियोगेन ॥ २७ ॥

पूर्ववद्वा ॥ वाशब्दः पक्षद्वयव्यावृत्त्यर्थः; यथा पूर्वत्र जीवस्य प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वम्; एवमचिद्वस्तुनोऽपि।[१]"आत्मैवेदं सर्वम्" इति चिदचितोरेकेनैव शब्देन ऐक्याभिधानमित्यंशत्वमप्येकरूपमिति 'पूर्ववद्वा' इत्युक्तम्। इतरपक्षयोर्ब्रह्मणस्सदोषतादि दुर्वारमित्यर्थः। [२]"यस्य पृथिवी शरीरम्" [२]"यस्याऽऽत्मा शरीरम्" इति चिदचिद्वस्तुनोश्शरीरतया तद्विशेषणस्वभावता सिद्धा ॥ २८ ॥

प्रतिषेधाच्च ॥ [३]"नास्य जरयैतज्जीर्यति" इत्यादिनाऽचिद्धर्मप्रतिषेधाच्चैवम् ॥ २९ ॥

इति वेदान्तसारे अहिकुण्डलाधिकरणम् ॥ ६ ॥

---

वेदान्तदीपे — उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ [४]"द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिष्टमचिद्वस्तुनो ब्रह्मरूपत्वं किं ब्रह्मस्वरूपस्यैवाचिद्रूपेण परिणामाद्भवति, उत परस्मिन्ब्रह्मण्यचिद्वस्तुनि चैकजातियोगात्, अथ जीववद्ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनेति संशयः। भिन्नत्वाभिन्नत्वरूपोभयव्यपदेशोपपत्तये ब्रह्मैवाचिद्रूपेण परिणमत इति प्रथमः पक्षः। तथा तु सति ब्रह्मणो निर्दोषत्वादिकं बाध्येतेत्येकजातियोगेनेति द्वितीयः पक्षः। एवं सति [१]"आत्मैवेदं सर्वम्"[५]"ब्रह्मैवेदं सर्वम्" इति ब्रह्मस्वरूपस्यैव सर्वशब्दवाच्यत्वव्यपदेशबाधस्स्यात्। नह्येकैव गोव्यक्तिः 'खण्डो गौः, मुण्डो गौः, पूर्णशृङ्गो गौः' इत्यादिसर्वगोव्यक्तिवाचकशब्दैरभिधीयते। अतो जीवस्येव ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनाचिद्वस्तुनोऽपि ब्रह्मांशत्वमिति राद्धान्तः। सूत्रार्थस्तु—तुशब्दोऽवधारणे। अहेः कुण्डलभावादिवद्ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानम्; कुतः? नानात्वैकत्वोभयव्यपदेशात् ॥ २६ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ वाशब्दोऽनन्तरोक्तव्यावृत्त्यर्थः; यथा प्रकाशतदाश्रययोः तेजस्त्वेनैकजातियोगादभिन्नत्वं, भिन्नत्वञ्च, एवमचिद्ब्रह्मणोरपि ॥ २७ ॥

---

* रैक्यमेकजाति. पा ॥ १. छा. ७-२५-२॥—२. बृ. ५-७-३-२२॥—३. छा.८-१-५॥—४. बृ. ४-३-१॥—५. बृ. ४-५-१ ॥

पूर्ववद्वा ॥ वाशब्दः पक्षद्वयव्यावृत्त्यर्थः ; पूर्ववत्—यथा पूर्वत्र १"अंशो नानाव्यपदेशात्" २"प्रकाशादिवत्तु नैवं परः" इत्युभयव्यपदेशोपपत्तये ब्रह्मणो निर्दोषत्वसिद्धये च प्रकाशजातिगुणशरीरवत् पृथक्सिद्ध्यनर्हविशेषणतया जीवस्य ब्रह्मांशत्वमुक्तम् ; एवमचिद्वस्तुनोऽपि । अचिद्वाचिशब्देनाप्यचिद्वस्तुविशिष्टं ब्रह्मैवाभिधेयमिति ३"आत्मैवेदं सर्वं" ४"ब्रह्मैवेदं सर्वम्" इत्यभेदव्यपदेशोपपत्तिः। विशेषणविशेष्ययोस्स्वरूपस्वभावभेदज्ञापनाय विशेषणविशेष्यौ निष्कृष्य भेदेन व्यपदेशश्चोपपद्यते।५ "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" इति ब्रह्मणो निर्दोषत्वञ्च ॥ २८ ॥

प्रतिषेधाच्च ॥ ६"स वा एष महानज आत्माऽजरोऽमरः" ७"नास्य जरयैतज्जीर्यति विजरो विमृत्युः" इत्यादिभिः ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यभावेनैवांशांशिभाव इत्यर्थः ॥ २९ ॥

इति वेदान्तदीपे अहिकुण्डलाधिकरणम् ॥ ६ ॥

---

(श्रीशारीरकमीमांसाभाष्ये पराधिकरणम् ॥ ७ ॥)

---

# परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः।३।२।३०॥

इदानीमस्मात्परस्माज्जगन्निमित्तोपादानरूपपरमकारणात्परब्रह्मणः परमपि किञ्चित्तत्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते, अस्योपास्यस्य निर्दोषत्वानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वस्थेम्ने । तत्रेयमाशङ्का-यदिदं परं ब्रह्मोभयलिङ्गम् ; एतस्मान्निखिलजगत्कारणात्परमपि किञ्चित्तत्वमस्ति । कथम्? ८"अथ य आत्मा स सेतुर्विधृतिः" इत्यस्य परस्य सेतुत्वव्यपदेशात् । सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यदनेन प्राप्तव्यमस्तीति गम्यते। तथा ९"एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति" इति तरितव्यता चास्याभिधीयते; अतश्चान्यत्प्राप्य-

१. शारी. २-३-४२॥—२. शारी. २-३-४५ ॥—३. छा. ७-२५-२॥—४. बृ. ४-५-१ ॥—५. श्वे. ५-१ ॥—६. बृ. ६-४-२५ ॥—७. छा. ८-१-५ ॥ —८. छा. ८-४-१ ॥—९. छा. ८-४-२ ॥

मस्ति। उन्मानव्यपदेशाच्च—उन्मितं—परिमितम् इदं परं ब्रह्म,[१]"चतुष्पाद्ब्रह्म" [२]"षोडशकलम्" इत्युन्मानव्यपदेशात्। सचायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तितां द्योतयति। तथा सम्बन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते, [३]"अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" [४]"अमृतस्यैष सेतुः" इति। अतश्च परात्परमस्ति। भेदेन च परात्परं व्यपदिश्यते, [५]"परात्परं पुरुषमुपैति" [६]"परात्परं यन्महतो महान्तम्" इतिच। तथा [७]"तेनेदं पूर्णं पुरुषेण सर्वम्" [८]"ततो यदुत्तरतरं तदरूपमनामयम्" इति। अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यत इति ॥ ३० ॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—

## सामान्यात्तु । ३ । २ । ३१ ॥

तुशब्दः पक्षं व्यावर्तयति; यत्तावदुक्तं सेतुव्यपदेशात्परापरमस्तीति; तन्नोपपद्यते। न ह्ययमत्र किञ्चित्प्राप्यं प्रति सेतुरुच्यते, [९]"एषां लोकानामसम्भेदाय" इति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः। सिनोति—बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते। [९]"एतं सेतुं तीर्त्वा" इति तरतिश्च प्राप्तिवचनः। यथा 'वेदान्तं तरति' इति ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् । ३ । २ । ३२ ॥

योऽयं [१]"चतुष्पाद्ब्रह्म" [२]"षोडशकलम्" [१०]"पादोऽस्यविश्वा भूतानि" इत्युन्मानव्यपदेशः; स बुद्ध्यर्थः—उपासनार्थः, [११]"सत्यं ज्ञानमनन्तं

१. छा. ३-१८-२ ॥—२. प्रश्न. ६-१ ॥—३. श्वे. ६-१९॥—४. मु. २-२-५ ॥—५. मु. ३-२-८ ॥—६. तै. नारा. १-५ ॥—७. श्वे. ३-९ ॥—८. श्वे. ३-१० ॥—९. छा. ८-४-१, २ ॥—१०. पुरुषसू. ॥—११. तै. आनं १. अनु. १ ॥

ब्रह्म" इत्यादिभिर्जगत्कारणस्य ब्रह्मणोऽपरिच्छिन्नत्वावगमात्स्वत उन्मितत्वासम्भवात्। जगत्कारणत्वं हि तस्यैव श्रूयते–[1]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" [2]"सोऽकामयत बहु स्यां प्रजायेयेति" इति। अतो यथा [3]"वाक्पादः प्राणः पादः चक्षुः पादो मनः पादः" इत्यादिना ब्रह्मणो वागादिपादव्यपदेश उपासनार्थः; एवमयमपि ॥ ३२ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानसम्भवः; तत्राह—

## स्थानविशेषात्प्रकाशादिवत् । ३ । २ । ३३ ॥

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्तत्सम्बन्धितयोन्मितत्वानुसन्धानं सम्भवति; यथा प्रकाशाकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिद्यानुसन्धानसम्भव इत्यर्थः ॥ ३३ ॥

## उपपत्तेश्च । ३ । २ । ३४ ॥

यदुक्तम्–[4]"अमृतस्यैषसेतुः" इति प्राप्यप्रापकसम्बन्धव्यपदेशात्प्रापकात्परं प्राप्यमस्तीति; तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः। [5]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यनन्योपायत्वश्रवणात् ॥ ३५ ॥

## तथाऽन्यप्रतिषेधात् । ३ । २ । ३५ ॥

यत्पुनरुक्तं–[6]"ततो यदुत्तरतरं" [7]"परात्परं पुरुषम्" [8]"अक्षरात्परतः परः" इत्यादिभेदव्यपदेशात्परात्परमस्तीति–तन्नोपपद्यते, तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात्, [9]"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति। यस्मादपरं परं नास्ति कि-

१. तै. आनं १. अनु. २ ॥ —२. तै. आनं ६. अनु. २ ॥ —३ छा. ३-१८-२ ॥ —४. मु. २. २-५ ॥ —५. मु. ३.२ ३ ॥—६. श्वे. ३. अ. १० ॥—७. मु. ३ २-८ ॥—८. मु. २-१-२ ॥—९. श्वे. ३-९ ॥

श्चित्–न केनापि प्रकारेण परमस्तीत्यर्थः। तथाऽन्यत्रापि [१]"न ह्येतस्मा- दितिनेत्यन्यत्परमस्ति" इति–इति नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं न ह्यस्तीत्यर्थः। तथा [२]"न तस्येशे कश्चन तस्य नाम महद्यशः" इति। तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तं [३]"सर्वे निमेषा जज्ञिरे विद्युतः पुरु- षादधि" [२]"स आपः प्रदुघे उभे इमे" इत्यादिना। [४]"अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इति च जगत्कारणं पुरुषमेनं प्रत्यभिज्ञापयति। [५]"ततो यदुत्तरतरम्" इति किमुच्यत इतिचेत्—पूर्वत्र [६]"वेदाहमेतं पुरुषं महा- न्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः प- न्था विद्यतेऽयनाय" इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्व- साधनम्, नान्योऽमृतत्वस्य पन्था इत्युपदिश्य तदुपपादनाय [७]"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषस्य परत्वं, तद्व्य- तिरिक्तस्य परत्वासम्भवश्च प्रतिपाद्य [५]"ततो यदुत्तरतरं तदरूपमनामयम्- य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" इति पूर्वोक्तमर्थं हेतु- तो निगमयति–यदुत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः, ततो य एतत्पुरुषतत्त्वं विदुः, त एवामृता भवन्ति, अथेतरे दुःखमेवापियन्ति– इति। अन्यथोपक्रमविरोधोऽनन्तरोक्तिविरोधश्च। [८]"परात्परं पुरुषमुपैति दिव्यम्" इति पूर्वत्र [९]"अक्षरात्परतः परः" इति-अक्षरात्-अव्याकृतात् यः परः-समष्टिपुरुषः;तस्मात्परो योऽदृश्यत्वादिगुणकस्सर्वज्ञः परमपुरुषः, स एवेहापि 'परात्परः' इति समष्टिपुरुषात्परत्वेनोच्यते ॥ ३५ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः॥३।२।३६॥

अनेन-ब्रह्मणा, सर्वगतत्वम्-सर्वस्य जगतो व्याप्तत्वम्,आयामशब्दा-

---

१. बृ. ४-३-६॥—२. तै. नारा. १-९॥—३. तै.नारा.१-८॥—४.तै.नारा.१-११॥ —५. श्वे. ३-१०॥—६. ७. श्वे. ३-८-९॥—८. मु. ३-२-८॥—९. मु. २-१-२॥

दिभ्यः-सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमस्मात्परं नास्तीत्यवगमयति। आयामशब्दस्तावत् [1]"तेनेदं पूर्णं पुरुषेण सर्वम्" [2]"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" [3]"नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः"। आदिशब्दात् [4]"ब्रह्मैवेदं सर्वम्" [5]"आत्मैवेदं सर्वम्" इत्यादयो गृह्यन्ते। अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ ३६ ॥

इति श्रीशारीरकमीमांसाभाष्ये पराधिकरणम् ॥ ७ ॥

---

वेदान्तसारे—परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ [6]"जन्माद्यस्य यतः" इत्यादिना [7]"प्रतिषेधाच्च" इत्येतदन्तेन यत्परमकारणं ब्रह्म प्रतिपादितम् ; अतः परमपि किञ्चित्तत्त्वमस्तीति युक्त्याभासेनाशङ्क्यते। [8]"अथ य आत्मा स सेतुः"[8]"एतं सेतुं तीर्त्वा"[9]"चतुष्पाद्ब्रह्म" [10]"अमृतस्यैष सेतुः" इत्यादिभिरस्य ब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्वप्रापकत्वव्यपदेशेभ्यः, [1]"तेनेदं पूर्णं पुरुषेण सर्वं" [11]"ततो यदुत्तरतरम्" इत्येतस्मादर्थान्तरव्यपदेशाच्चान्यत्परमस्तीति ॥ ३० ॥

सामान्यात्तु ॥ तुशब्देनैतद्व्यावर्तयति ; नैतद्युक्तम् ; कुतः? [12]"न ह्येतस्मादितिनेत्यन्यत्परमस्ति" इति मूर्तामूर्तप्रपञ्चप्रकारतया तद्विशिष्टात् इति नेति निर्दिष्टात् ब्रह्मणोऽन्यत्परन्नास्तीत्यादिनिषेधसहस्रात् । परस्मिन् ब्रह्मणि सेतुत्वव्यपदेशः प्रशासनात् सर्वलोकासङ्करकरत्वेन सेतुसामान्याच्च । तथाह—[8]"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' इति। [13]"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यारभ्य उक्तजगन्निमित्तोपादानभूतस्यैव ब्रह्मणः [13]"एतमितः प्रेत्याभिसम्भविताऽस्मि" इति परमप्राप्यत्ववचनात् तरतिरपि प्राप्तिवचनः ॥ ३१ ॥

बुद्ध्यर्थः पादवत् ॥ [9]"चतुष्पात्"इति उन्मानव्यपदेशोऽपि [9]"वाक्पादः चक्षुः पादः" इतिवदुपासनार्थः ॥ ३२ ॥

---

१. श्वे.३-९ ॥—२. पुरुषसूक्तम् ॥—३. मु. १-१-६ ॥—४. बृ. ४-५-१ ॥—५. छा. ७-२५-२ ॥—६. शारी. १-१-२॥—७. शारी. ३-२-२९ ॥—८. छा. ८-४-१, २ ॥—९. छा. ३-१८-२ ॥— १०. मु. २-२-५ ॥—११. श्वे. ३-१०॥—१२. बृ ४-३-६ ॥—१३. छा. ३-१४-१, ४ ॥

**स्थानविशेषात्प्रकाशादिवत्** ॥ अपरिमितस्यापि स्थानविशेषसम्बन्धादवच्छिद्यानुसन्धानं युज्यते, प्रकाशाकाशादेरिव विततस्यापि वातायनघटादिना ॥ ३३ ॥

**उपपत्तेश्च** ॥ प्राप्यस्यैव परमात्मनः प्रापकत्वोपपत्तेः; यथाह—१"यमेवैष वृणुते तेन लभ्यः" इति ॥ ३४ ॥

**तथाऽन्यप्रतिषेधात्** ॥ २"यस्मात्परन्नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इत्यस्मिन्वाक्ये पुरुषादन्यस्य ज्यायस्त्वप्रतिषेधादितोऽधिकन्नास्ति । २"ततो यदुत्तरतरम्"इति तु यतः पुरुषतत्त्वादन्यदुत्कृष्टन्नास्ति ; तत उत्तरतरं पुरुषतत्त्वमेवारूपमनामयम् ; २"य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति" इत्युपक्रमप्रतिज्ञातं सहेतुकमुपसंहृतम् । २"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः"इत्युपक्रमे प्रतिज्ञातम् ; अन्यथा उपक्रमविरोधश्च ॥ ३५ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥ ३"अणोरणीयान्महतो महीयान्" २"तेनेदं पूर्णं पुरुषेण सर्वम्" ४"व्याप्य नारायणस्स्थितः" ५"नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यादिशब्दैरनेन ब्रह्मणा स्वव्यतिरिक्ततत्त्वस्य व्याप्तत्वमवगतम् ; त ् तस्मात्परं वारयति ॥ ३६ ॥

इति वेदान्तसारे पराधिकरणम् ॥ ७ ॥

---

**वेदान्तदीपे—परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** ॥ ६"यतो वा इमानि" इत्यादिना जगज्जन्मादिकारणतया निर्दिष्टात्परस्माद्ब्रह्मणोऽपि परं तत्त्वं किञ्चिदस्ति, नेति संशयः । इतोऽपि परमस्तीति पूर्वः पक्षः। ७"अथ य आत्मा स सेतुः" इत्यस्य सेतुत्वव्यपदेशात्, ७"एतं सेतुं तीर्त्वा" इत्यस्य तरितव्यत्वोपदेशाच्चातोऽन्यदप्यस्तीति गम्यते । ८"चतुष्पाद्ब्रह्म" ९"षोडशकलम्"इति परिमितत्वव्यपदेशाच्चापरिमितमन्यदस्तीति प्रतीयते। १०"अमृतस्यैष सेतुः" इति प्रापकत्वश्रुतेश्चानेन प्राप्यमन्यदस्तीति प्राप्यप्रापकरूपसम्बन्धात्प्रतीयते । तथा २"तेनेदं पूर्णं पुरुषेण सर्वम्" २"ततो यदुत्तरतरम्" इति पुरुषशब्दनिर्दिष्टाद्ब्रह्मण उत्तरतरत्वेन भेदव्यपदेशाच्चान्यत्परमस्ति । रा-

---

१. मु. ३-२-३॥—२. श्वे. ३-९-१०-८॥—३. तै.नारा.१०-१॥—४.पुरुषसूक्ते॥—५. मु १-१-६ ॥—६. तै. भृ. १-अनु॥—७. छा. ८-४-१, २ ॥ —८. छा. ३-१८-२॥—९. प्रश्न. ६-१ ॥—१०. मु. २-२-५ ॥

द्धान्तस्तु—१"न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति नेति निर्दिष्टात् मूर्तामूर्तरूपाद्ब्रह्मणोऽन्यत्परं नास्तीति परतत्त्वनिषेधात्कारणाद्ब्रह्मणोऽन्यत्परं नास्ति। सेतुत्वव्यपदेशस्तु २"एषां लोकानामसम्भेदाय" इति सर्वलोकासङ्करकरत्वकृतः। २"एतं सेतुं तीर्त्वा" इति तरतिरपि 'वेदान्तं तरति' इतिवत्प्राप्तिवचनः। ३"चतुष्पाद्ब्रह्म" ४ 'षोडशकलम्" इत्युन्मानव्यपदेशोऽपि ३"वाक्पादः ...चक्षुः पादः" इतिवदुपासनार्थः। सम्भवति चापरिमितस्यापि तत्तद्देशसम्बन्धितयोन्मितत्वानुसन्धानम्। ५"अमृतस्यैष सेतुः" इति स्वस्यैवामृतस्य स्वयमेव प्रापकमुच्यते, ६"यमेवैष वृणुते तेन लभ्यः"इत्यादिश्रुतेः। ७"ततो यदुत्तरतरम्" इत्यपि ७"तेनेदं पूर्णम्" इति निर्दिष्टात्पुरुषादन्यस्य न परत्वमाह; अपि तु ७"तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति पूर्वप्रतिज्ञातं पुरुषवेदनस्यामृतत्वहेतुत्वमन्यस्य चापथत्वं सहेतुकमुपसंहरति। ७"यस्मात्परं नापरमस्ति किञ्चित्" इत्यारभ्य "७तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषस्य सर्वस्मात्परत्वं ज्यायस्त्वमन्यस्य परत्वाभावं च प्रतिपाद्य ततो हेतोः यदुत्तरतरं पुरुषतत्त्वम्; तदेवारूपमनामयम्; ७"य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति" इति पूर्वप्रतिज्ञातमेवोपसंहृतम्॥

सूत्रार्थस्तु—परमतः-८"जन्माद्यस्य यतः" इत्यारभ्य ९"अतोऽनन्तेन तथाहि लिङ्गम्" इत्यन्तेन प्रतिपादितान्निखिलजगदेककारणात्सर्वान्तरात्मनो निरस्तनिखिलदोषगन्धानवधिकातिशयानन्तकल्याणगुणाकरात्परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति कश्चिन्मन्यते। कुतः? सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः। व्याख्याताश्चैते॥३०॥

**सामान्यात्तु**॥ तुशब्दः पक्षं व्यावर्तयति; सेतुत्वव्यपदेशस्तावत् तस्मात्परं नावगमयति, सेतुसामान्यात्—सादृश्याज्जगद्विधृतिरूपात् ब्रह्मणस्तथाव्यपदेश इति श्रुतिरेव सेतुशब्दं व्याचष्टे—१०"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इति। यद्यत्स्वभावा लोकास्सृष्टास्तत्तत्स्वभावासङ्कराय सर्वान् लोकानयमेव सेतुवद्बिभर्तीति सेतुरित्यर्थः॥३१॥

**बुद्ध्यर्थः पादवत्**॥ ३"चतुष्पाद्ब्रह्म" ११"पादोऽस्य विश्वा भूतानि"

---

१. बृ. ४-३-६॥—२. छां. ८-४. १-२॥—३. छां. ३-१८-२॥—४. प्रश्न. ६-१॥—५. मु. २. २-५॥—६. मु. ३-२-३॥—७. श्वे. ३-अ. १०-९-८॥—८. शारी. १-१-२॥—९. शारी. ३-२-२५॥—१०. छां. ८-४. १॥—११. पुरुषसू.॥

इत्युन्मानव्यपदेशस्तथाऽनुसन्धानार्थः; १"वाक्पादः...चक्षुः पादः" इतिवत् ॥ ३२ ॥

अपरिमितस्वरूपस्यानुसन्धानार्थतयापि कथं परिमितत्वमित्यत आह—

**स्थानविशेषात्प्रकाशादिवत् ॥** प्रतिपन्नवागादिस्थानविशेषसम्बन्धात्तत्स्थानसम्बन्धित्वेनावच्छिद्यानुसन्धानं युज्यते; यथा प्रकाशादेर्विततस्यापि वातायनघटादौ ॥ ३३ ॥

**उपपत्तेश्च ॥** २"अमृतस्यैष सेतुः" इत्यमृतस्य स्वस्य स्वयमेव प्रापक इति सेतुत्वव्यपदेशोपपत्तेश्चान्यत्परमस्तीति कल्पनं न युज्यते। ३"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि श्रूयते ॥ ३४ ॥

**तथाऽन्यप्रतिषेधात् ॥** ४"तेनेदं पूर्णं पुरुषेण सर्वं" ४"ततो यदुत्तरतरम्" इति पुरुषादन्यस्य न परत्वमाह—५"न तस्येशे कश्चन" ६"न ह्येतस्मादिति नेत्यन्यत्परमस्ति" ४"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" यस्मादपरं परं नास्ति किञ्चिदित्यर्थः; एवमादिषु पुरुषादन्यस्य परत्वप्रतिषेधात्। ४"ततो यदुत्तरतरम्" इति तु यतः पुरुषतत्त्वमेवोत्तरतरम्; ततो हेतोः यदुत्तरतरं पुरुषतत्त्वम्; तदेव ४"अरूपमनामयम्" इत्यादिना व्याख्यातम्। ४"य एतद्विदुरमृतास्ते भवन्ति" इति—४"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" इति प्रतिज्ञातमेवोपसंहृतम्। ५ 'न तस्येशे कश्चन तस्य नाम महद्यशः" इति च पुरुषतत्त्वमेव वदति। अनन्तरम् ७"अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इति पुरुषतत्त्ववाचिनैकवाक्यत्वावगमात् ८'अम्भस्यपारे" ९"यमन्तस्समुद्रे कवयो वयन्ति" इति च प्रक्रमात् ॥ ३५ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥** अनेन ब्रह्मणा सर्वस्य व्याप्तत्वं ४'तेनेदं पूर्णं पुरुषेण सर्वम्" १०"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ११"नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यायामशब्देभ्यः—सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यते। एवमवगम्यमानमेतस्मात्परं वारयतीत्यर्थः। आदिशब्दात् १२"आत्मैवेदं सर्वम्" इत्यादि-

१. छा. ३ १८-२॥—२. मु. २-२-५॥—३. मु ३ २-३॥—४. श्वे. ३-९,१०,८॥—५. तै.नारा. १-९ ॥—६. बृ ४-३-६ ॥—७. तै. नारा. १-११ ॥—८. तै. ना. १-१ ॥—९. तै. नारा. १-३ ॥—१०. तै. नारा. ११-२५ ॥—११. मु. १-१-६ ॥—१२. छा. ७-२५-२॥

यो गृह्यन्ते। अतः १"यतो वा इमानि" इत्यादिनाऽवगतजगन्निमित्तोपादानकारणाद्ब्रह्मणोऽन्यत्परं न विद्यते ॥ ३६ ॥

इति वेदान्तदीपे पराधिकरणम् ॥ ७ ॥

(श्रीशारीरकमीमांसाभाष्ये फलाधिकरणम् ॥ ८ ॥)

## फलमत उपपत्तेः । ३ । २ । ३७ ॥

उक्तमुपासिसिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वं, प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं, कल्याणगुणाकरत्वं, सर्वस्मात्परत्वञ्च; अतः परमुपासनं विवक्षन्नुपासीनानां परस्मादेवास्मात्पुरुषात्तत्प्राप्तिरूपमपवर्गाख्यं फलमिति सम्प्रति ब्रूते। तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलम् अत एव परस्मात्पुरुषाद्भवतीति सामान्येन 'फलमतः' इत्युच्यते। कुत एतत्? उपपत्तेः—स एव हि सर्वज्ञस्सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधित ऐहिकामुष्मिकभोगजातं स्वस्वरूपावाप्तिरूपमपवर्गं च दातुमीष्टे; नह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥

## श्रुतत्वाच्च । ३ । २ । ३८ ॥

२"स वा एष महानज आत्माऽन्नादो वसुदानः" ३"एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीतिहि श्रूयते ॥ ३८ ॥

सम्प्रति पूर्वपक्षमाह—

## धर्मं जैमिनिरत एव । ३ । २ । ३९ ॥

अत एव-उपपत्तेः,शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराच्यार्यो मन्यते। लोके हि कृष्यादिकर्म, दानादिकं च कर्म सा-

१. तै. भृगु. १-अनु ॥—२. बृ. ६-४-२४ ॥—३. तै. आनं. ७-१ ॥—

क्षाद्वा, परम्परयावा स्वयमेव फलसाधनं दृष्टम्; एवं वेदेऽपि यागदानहोमादीनां साक्षात्फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वारेण फलसाधनत्वमुपपद्यते। तथा १"यजेत स्वर्गकामः" इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्तव्यतया यागाद्यभिदधदन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमवगमयति ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात्।३।२।४०॥

तुशब्दः पक्षव्यावृत्त्यर्थः; पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान्बादरायणो मन्यते। कुतः? हेतुव्यपदेशात्—२"यज-देवपूजायाम्" इति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात् ३"वायव्यं श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति"इत्यादिषुकामिनस्सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपिविध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता।एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वादिपरिकल्पनं च प्रामाणिका न सहन्ते।लिङादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति; नान्यदलौकिकमिति प्रागेवोक्तम्। तदेवं ३"वायुर्वै क्षेपिष्ठा देवता" इत्यादिशब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते।वाय्वाद्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते ४"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इति। अन्तर्यामिब्राह्मणे च ५"यो वायौ तिष्ठन्यस्य वायुश्शरीरम्"

---

१. यजुषि. २-५-५ ॥—२. धातु-भ्वादि ॥—३. यजु. २-कां. १-प्र. १-पं॥—४. तै. नारा. १-६ ॥—५. बृ. ५-७-७ ॥

१"योऽग्नौ तिष्ठन्" १"य आदित्ये तिष्ठन्" इत्यादि श्रूयते। स्मर्यते च २"यो-यो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्" इति, ३"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच" इति। प्रभुरिति–फलप्रदायीत्यर्थः। २"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" ३"यान्ति मद्याजिनोऽपि माम्" इति च। लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य तैः राजानं भृत्यद्वारेण साक्षाद्वाऽर्चयन्ति; अर्चितश्च राजा तत्तदर्चनानुगुणं फलं प्रयच्छन् दृश्यते। वेदान्तास्त्वतिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य, तदाराधनरूपाणि च यागदानहोमात्मकानि, स्तुतिनमस्कारकीर्तनार्चनध्यानानि च तदाराधनानि, आराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपं फलं च, वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥

इति श्रीशारीरकमीमांसाभाष्ये फलाधिकरणम् ॥ ८ ॥

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

वेदान्तसारे—फलमत उपपत्तेः ॥ अतः परस्माद्ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपफलं सिद्ध्यति ; कर्म क्षणध्वंसि न कालान्तरभाविफलायालमिति सर्वज्ञात् परमकारुणिकात् फलसिद्धिरुपपद्यते॥३॥

श्रुतत्वाच्च ॥ श्रुतमेव हि ४"अन्नादो वसुदानः" ५"एष ह्येवानन्दयाति" इति अस्यैव फलदायित्वम् ॥ ३८ ॥

धर्मं जैमिनिरत एव ॥ धर्ममेव अतः—उपपत्तेः, श्रुतत्वाच्च, फल६दायिनं जैमिनिर्मेने। उपपत्तिस्तु कृष्यादेर्मर्दनादेश्च कर्मणस्साक्षात्परम्परया-

१. बृ. ५-७-५, ९ ॥—२. गी. ७-२१,२२,२३ ॥—३. गी. ९-२४,२५ ॥—४. बृ. ६-४-२४ ॥—५. तै. आनं. ७-१ ॥—६. साधनं. पा ॥

वा फलसिद्धिदर्शनम् । श्रुतत्वञ्च कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वद्वारेण तत्तत्फलसाधनमिति निश्चयः ॥ ३९ ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ पूर्वोक्तं परमपुरुषस्यैव फलदायित्वं भगवान् बादरायणो मन्यते, १"वायव्यं श्वेतमालभेत" इत्यादिषु १"स एवैनं भूतिं गमयति" इति भगवदात्मकतया वाय्वादेः कर्मविधिष्वेव फलहेतुत्वव्यपदेशात् । वाक्यशेषस्थं विध्यपेक्षितं हि २"प्रतितिष्ठन्ति ह वा" इत्यादिषु स्वीक्रियते । ३"यो वायौ तिष्ठन्" इति हि श्रूयते ॥ ४० ॥

इति वेदान्तसारे फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

वेदान्तदीपे—फलमत उपपत्तेः ॥ किं वेदोदितं यागदानहोमादिकमुपासनाख्यं च ४"यजेत"५"उपासीत" इति कामिनो मुमुक्षोश्च कर्तव्यतया श्रूयमाणं कर्मैवापूर्वद्वारेण भोगापवर्गरूपफलदम्, उत तत्तदाराधनैः प्रीतः परमपुरुष एव फलद इति संशयः । कर्मैवेति पूर्वः पक्षः, लोके मर्दनादेः कृष्यादेश्च कर्मण एव साक्षात्परम्परया वा फलप्रदत्वदर्शनात् । वेदे च ४"यजेत स्वर्गकामः" ५"आत्मानमेव लोकमुपासीत" इति कामिनो मुमुक्षोश्च कर्तव्यतया श्रूयमाणं कर्म तत्तत्फलसाधनतयाऽवगतं क्षणिकमप्यपूर्वद्वारेण भोगापवर्गरूपसर्वफलप्रदम् । राद्धान्तस्तु—कर्तव्यतयाऽवगतस्य यागादेरुपासनस्य च ६"यज देवपूजायाम्" इत्यादिनाऽवगतधात्वर्थस्वाभाव्यात्, १"वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाक्यशेषाच्च, ७"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" ८"स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हि तान्" ९"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" १०"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" ११"तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्" इत्यादिश्रुतिस्मृतिभ्यश्च, परमपुरुष एव कर्मभिरुपासनेन चाराधितो भोगापवर्गरूपफलप्रदः । लोके च कृष्या-

---

१. यजु. २-कां. १-प्र. १-पं॥ —२ ॥—३ बृ. ५-७ ७॥—४. यजुषि. २-५-५ ॥ ५. छा. १-१-१; बृ ३ ४ १५ ॥—६. धातु-भ्वादि ॥ —७. तै. ना. १-६ ॥—८. गी. ७-२२ ॥—९. गी ९ २४ ॥— १०. गी. १८-४६ ॥—११. गी. १८-६२ ॥

दिकर्मभिस्सस्यादिकमुत्पाद्य, तेन भृत्यद्वारेण साक्षाद्वा राजानमभ्यर्च्य, तत एवापेक्षितानि लभन्ते ; अतः परमपुरुष एव फलप्रदः ॥

सूत्रार्थस्तु—फलमत उपपत्तेः—अतः—परस्माद्ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपफलम् । कुतः ? उपपत्तेः—कर्म हि क्षणध्वंसि न कालान्तरभाविफलायालम् ; स हि सर्वज्ञस्सर्वशक्तिः परमकारुणिको महोदारः अनादिरनन्तश्च सर्वेश्वरः स्वाराधनरूपेण कर्मणा आराधितः फलप्रद इत्युपपद्यते ॥ ३७ ॥

श्रुतत्वाच्च ॥ १" स वा एष महानज आत्मा अन्नादो वसुदानः" २"एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

धर्मं जैमिनिरत एव ॥ यागादिकमुपासनात्मकं च धर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते, अतएव—उपपत्तेश्श्रुतत्वाच्चेत्यर्थः । लोके कृष्यादेर्मर्दनादेश्च कर्मण एव साक्षात्परम्परया वा फलदायित्वदर्शनात् वेदेऽपि तथैव युक्तमित्युपपत्तिः । उपपद्यते चापूर्वद्वारेण साधनत्वम् । ३"यजेत स्वर्गकामः" ४" ब्रह्मविदाप्नोति परम्" इति कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वद्वारेण फलसाधनमित्यवगम्यते ॥ ३९ ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ तुशब्दः पक्षव्यावृत्त्यर्थः । पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते । कुतः ? हेतुव्यपदेशात्—५" वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाय्वाद्यात्मना अवस्थितस्य परमपुरुषस्यैव फलप्रदत्वव्यपदेशात् । ६"यो वायौ तिष्ठन्" इति च वाय्वाद्यात्मना स एव व्यवस्थितश्श्रूयते, ७" तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः " इति च । तत्परित्यागेनापूर्वस्य फलसाधनत्वकल्पने श्रुतहानमश्रुतकल्पनं च । विध्यपेक्षितफलसाधनत्वप्रकारे वाक्यशेषेणावगते सति न फलसाधनत्वप्रकारकल्पनं न्याय्यम्; यथैव हि रात्रिसत्रादिष्वधिकारी न कल्प्यइत्यर्थः ॥ ४० ॥

इति वेदान्तदीपे फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

१. बृ. ६-४-२४ ॥—२. तै. आनं, ७-१॥—३. यजुषि. २-५-५॥—४. तै आनं-१. अनु. १॥—५. यजु. २-कां. १-प्र. १-पं॥—६. बृ. ५-७-७ ॥—७. तै. नारा. १-७॥



श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(तृतीयाध्याये-तृतीयः पादः-सर्ववेदान्तप्रत्ययाधिकरणम्॥)

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्।३।३।१॥

उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायित्वपर्यन्तम्; इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदचिन्ता प्रस्तूयते। प्रथमं तावदेकस्या वैश्वानरविद्यादिकायाः अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वम्, उत विद्याभेद इति चिन्त्यते। अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च भेदकत्वाच्छाखान्तरे चोभयोरवर्जनीयत्वाद्विद्याभेद इति प्राप्तम्। अत एव [१]"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते। विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तेर्नियमो नोपपद्यते—

(सिद्धान्तः)

एवं प्राप्त उच्यते—सर्ववेदान्तप्रत्ययमेकमुपासनमिति। कुतः? चोदनाद्यविशेषात्-चोदना तावत्[२]"उपासीत"[३]"विद्यात्"इत्येवंजातीयको धात्वर्थविशेषविधिः। आदिशब्देन[४]"एकं वा संयोगरूपचोदनाख्या-

---

१. मु. ३-२-१० ॥—२. छा. १-१. १; बृ. ३-४-५ ॥—३. कठ. ६-१७॥—४. पूर्व. २-४-९ ॥

विशेषात्" इति कर्मकाण्डशाखान्तराधिकरणोक्तास्संयोगरूपाख्या गृह्यन्ते। एषां चोदनादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते। तथाहि—छान्दोग्यवाजसनेयकयोः [1]"वैश्वानरमुपास्ते" इति चोदना तावदेकरूपा; वेद्यैकनिरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूतवैश्वानरैक्याद्रूपमप्यविशिष्टम्; आख्या च वैश्वानरविद्येत्यविशिष्टा; फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः। अत एभिः प्रत्यभिज्ञानाच्छाखान्तरेऽपि विद्यैक्यम् ॥ १ ॥

यत्तूक्तमविशेषपुनश्श्रवणात्प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति, तदनुभाष्य परिहरति—

## भेदान्नेति चेदेकस्यामपि । ३ । ३ । २ ॥

अविशेषपुनश्श्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्यमिति चेत्—एकस्यामपि विद्यायां प्रतिपत्तृभेदात्पुनश्श्रुतिः प्रकरणान्तरं चोपपद्यते। यत्र ह्येकस्मिन् प्रतिपत्तरि पुनश्श्रुतिः प्रकरणान्तरं च विद्यते; तत्रान्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः, प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनश्श्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसम्भवः ॥ २ ॥

यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनाद्विद्याभेदः प्रतीयत इति, तत्राह—

नैतदस्ति—शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयति—इति, शिरोव्रतस्य विद्याङ्गत्वाभावात्। स्वाध्यायस्य तथात्वे हि तन्नियमः—स्वाध्यायस्य तथात्वसिद्ध्यर्थं—तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि शिरोव्रतोपदेशनियमः, न विद्यायाः। कुत एतत्? [2]"नैतदचीर्णव्रतोऽधीयीत" इति तस्याध्ययनसंयोगात्; समाचारेऽधिकाराच्च—समाचाराख्ये ग्रन्थे[3]"इदमपि वेदव्रतेन व्याख्यातम्" इत्यतिदेशात्। [4]"तेषामेवैतां ब्रह्मविद्यां वदेत"

---

१. छां. ५-१८-१ ॥—२. मु. ३-२, ११॥—३. समाचारे॥—४. मु. ३-२,१०॥

वेदविद्यामित्यर्थः । सववच्च तन्नियमः—यथाहि सवहोमास्सप्त सूर्योदयश्शतोदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनस्तत्रैव भवन्ति; न त्रेताग्निषु ॥

## दर्शयति च । ३ । ३ । ३ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्; तथाहि—छान्दोग्ये [1]"तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्युक्त्वा [2]"किं तदत्र विद्यते यदन्वेष्टव्यम्" इति प्रश्नपूर्वकम् अपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम्; तैत्तिरीयके तुच्छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य [3]"तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्" इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते; तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ३ ॥

तदेवं शाखान्तराधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ।३।३।४॥

एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तर उपसंहारः कर्तव्यः; कुतः? विधिशेषवदर्थाभेदात्—यथैकस्मिन्वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषो गुणस्तद्विद्यासम्बन्धात्तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते; तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोऽवधारणे ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

१. छा. ८-१-१ ॥—२. छा. ८-१-२ ॥—३. तै. नारा. १०-२३ ॥

वेदान्तसारे—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव १"विद्यात्" २"उपासीत" इति कर्मविधिष्विव चोदनाफलसंयोगरूपाख्यानामविशेषात् ॥ १ ॥

भेदान्नेतिचेदेकस्यामपि ॥ अविशेषपुनश्श्रुतिर्भेदापादिकेति न विद्यैक्यमिति चेत्—विद्यैक्येऽपि शाखान्तरे प्रतिपत्तृभेदान्न भेदः ॥ २ ॥

स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः॥ आथर्वणवेदे ३"तेषामेवैतां ब्रह्मविद्यां वदेत" इति शिरोव्रतवतां नियमः शिरोव्रतस्य स्वाध्यायाङ्गत्वेन, ४"नैतदचीर्णव्रतोऽधीयीत" इति तस्याध्ययनसम्बन्धावगमात्, समाचाराख्यग्रन्थे ५"इदमपि वेदव्रतेन व्याख्यातम्"इति वेदव्रतत्वावगमाच्च । ३"ब्रह्मविद्याम्" इत्यत्र ब्रह्मशब्दो वेदविषयः । यथा सवहोमास्तेषामेव, तथा शिरोव्रतमिति तन्न विद्याभेदलिङ्गम् ॥ ३ ॥

दर्शयतिच ॥ श्रुतिरेव विद्यैक्यं दर्शयति; छान्दोग्ये दहरविद्योक्तं गुणाष्टकं तैत्तिरीयके केवलं ६"तस्मिन्यदन्तः" इति वदति ॥ ४ ॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ एवं सर्वत्र विद्यैक्ये अन्यत्रोक्तानामन्यत्रोपसंहारः तद्विद्योपकाररूपार्थैक्यात्; यथैकविधिशेषतया विहिताङ्गानामिति ॥ ५ ॥

इति वेदान्तसारे सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ किं सर्वेषु वेदान्तेषु श्रूयमाणा दहरविद्या एकैव, उत विद्यान्तरमिति संशयः। अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च विद्याभेदहेतुत्वात् विद्यान्तरमिति पूर्वः पक्षः। चोदनाफलसंयोगरूपाख्यानामविशेषात्, प्रतिपत्तृभेदेन पुनश्श्रवणोपपत्तेः, तत एव प्रकरणान्तरत्वाभावाच्च, विद्यैक्यमिति राद्धान्तः। विद्यासु गुणोपसंहारादिचिन्तार्थं शाखान्तराधिकरणोक्तन्यायः तत्फलं च स्थिरीकृतम् । सूत्रार्थस्तु—सर्ववेदान्तप्रत्ययमेकं दहराद्युपासनम्, कुतः? चोदनाद्यविशेषात्॥ १॥

भेदान्नेति चेदेकस्यामपि॥ अविशेषपुनश्श्रुत्या विद्याभेदावगमान्न विद्यैक्यमिति चेत्—एकस्यामपि विद्यायां शाखान्तरे प्रतिपत्तृभेदात्पुनश्श्रवण-

१.कठ. ६-१७ ॥—२. छा. १-१ १ ॥—३. मु. ३-२-१०॥—४. मु. ३-२-११ ॥—५. समाचारे ॥—६. छा. ८-१-१ ॥

मर्थवदिति न विद्याभेदः ॥ २ ॥

१"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इत्याथर्वणिकानां शिरोव्रतस्य विद्योपदेशाङ्गत्वनियमदर्शनं विद्याभेदं द्योतयति, विद्यैक्ये ह्याथर्वणिकानामेवेति नियमो नोपपद्यत इत्याशङ्क्याह—

**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः॥** शिरोव्रतं न विद्याङ्गम् , अपि तु स्वाध्यायस्य तथात्वेहि-स्वाध्यायस्य तज्जन्यसंस्कारभाक्त्वे हि तन्नियमः, २"नैतदचीर्णव्रतोऽधीयीत" इत्यध्ययनसम्बन्धात्, समाचाराख्ये ग्रन्थे ३"इदमपि वेदव्रतेन व्याख्यातम्' 'इति वेदव्रतत्वावगमाच्च । १"ब्रह्मविद्यां वदेत"—वेदविद्यामित्यर्थः। सववच्च तन्नियमः—यथाहि सवहोमास्सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनः तत्रैव भवन्ति, तथेदमप्याथर्वणवेदसम्बन्धित्वेन तत्रैव भवति ॥ ३ ॥

**दर्शयति च ॥** दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् ; छान्दोग्ये दहरविद्यायां ४"तस्मिन्यदन्तः" इति विहितमपहतपाप्मत्वादिगुणाष्टकं तैत्तिरीयके केवलं ५"तस्मिन्यदन्तस्तदुपासितव्यम्" इत्येवोक्तम् ; तदुभयत्र विद्यैकत्वे सम्भवति ॥ ४ ॥

**उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥** तदेवं सर्ववेदान्तेषु दहराद्युपासने समाने-एकस्मिन् सति तत्तदुपासने वेदान्तान्तरविहितस्य गुणस्य वेदान्तान्तरे चोपसंहारः कर्तव्यः ; कुतः? अर्थाभेदात् तद्विद्याङ्गत्वेन तदुपकाराभेदात् । विधिशेषवत् —यथैकस्मिन्वेदान्ते वैश्वानरविद्यादिविधिशेषतया विहितस्य गुणस्य तदुपकारायोपसंहारः; तथा वेदान्तान्तरेऽपि तद्विद्याङ्गत्वाविशेषादुपसंहारो न्याय्यः ॥ ५ ॥

इति वेदान्तदीपे सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अन्यथात्वाधिकरणम् ॥२॥ )

---

## अन्यथात्वं शब्दादितिचेन्नाविशेषात् । ३ । ३ । ६ ॥

एवं चोदनाद्यविशेषाद्विद्यैकत्वम्, एकत्वे च गुणोपसंहारः कर्तव्य

---

१. मु. ३-२१०॥—२. मु. ३-२-११॥—३. समाचारे ॥—४. छा. ८-१-१॥—
५. तै. ना. १०-२३ ॥

इत्युक्तम्; अतः परं काश्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति, नेति निरूप्य निर्णीयते। अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च। वाजिनां तावत् [1]"द्वया ह प्राजापत्या देवाश्चासुराश्च" इत्यारभ्य [1]"ते ह देवा ऊचुः हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञायोद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा [2]"अथ हेममासन्यं प्राणमूचुः" इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा [2]"भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद" इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि [3]"देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य [3]"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय [4]"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा [4]"यथाऽश्मानमाखणमृत्वा विध्वंसते एवं हैव स विध्वंसते य एवं विदि पापं कामयते" इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता। वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्यते। उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम्। तत्र संशय्यते—किमत्र विद्यैक्यम्, उत नेति। किं युक्तम्? विद्यैक्यमिति। कुतः? उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणाच्चोदनाद्यविशेषात्। फलसंयोगस्तावच्छत्रुपरिभवरूपो न विशिष्यते। रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टम्। चोदना च विदिधात्वर्थगताऽविशिष्टा। आख्या चोद्गीथविद्येत्यविशिष्टा। अत्र राद्धा-

१. बृ. ३-३-१॥—२. बृ. ३-३-७॥—३. छा-१-२-१॥—४. छा. १-२-७,८॥

न्तिच्छायया परिचोद्य परिहरति—अन्यथात्वं शब्दादिति चेन्नाविशेषात्—इति। यदुक्तं विद्यैक्यमिति, तन्नोपपद्यते, रूपभेदात्; रूपान्यथात्वं हि शब्दादेव प्रतीयते; वाजसनेयके हि [1]"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्युद्गानस्य कर्तरि प्राणदृष्ट्याऽसुरपराभवमुक्त्वा [1] "य एवं वेद" इति कर्तर्येव प्राणदृष्टिरेवंशब्दादवगम्यते । छान्दोग्ये [2] "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा [2]"य एवंविदि पापं कामयते" इत्येवंशब्दात्कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता।अत एकत्र कर्तरि प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इतिचेत्—तन्न, अविशेषात्—अविशेषेण ह्युभयत्र उद्गीथसाधनकपरपरिभव उपक्रमे प्रतीयते; वाजसनेयके [3]"ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्याम" इत्युपक्रमे श्रूयते; छान्दोग्येऽपि [4]"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इति । अत उपक्रमाविरोधाय [1]"तेभ्य एष प्राण उदगायत्" इत्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिष्वोदनादिवत्सौकार्यातिशयविवक्षया कर्तृत्वेनोच्यते; अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात्, अतो विद्यैक्यम् ॥ ६ ॥

—••—(सिद्धान्तः)—••—

इति प्राप्ते प्रचक्ष्महे—

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् । ३।३।७॥

नवेति पक्षं व्यावर्तयति; नचैतदस्ति, यद्विद्यैक्यमिति; कुतः? प्रकरणभेदात् [5]"ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृतमुद्गीथावय-

१. बृ. ३-३-७ ॥—२. छा. १-२-७, ८ ॥—३. बृ. ३-३-१ ॥—४. छा. १-२-१ ॥—५. छा. १-१-१ ॥

वभूतं प्रणवं प्रस्तुत्य[१] "एतस्य वा अक्षरस्योपव्याख्यानं भवति"[२] "देवासुरा हवै यत्र संयेतिरे" इत्यारभ्य [३] "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्युद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते; वाजिनस्तु तादृशप्राचीनप्रकरणाभावात् [४] "हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इति कृत्स्नमुद्गीथं प्रस्तुत्य [५] "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाय" इत्यादिकृत्स्नोद्गीथविषयमधीयते; अतः प्रकरणभेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम्; किञ्च[३] "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति पूर्वप्रकृत उद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः; वाजिनां तु कृत्स्नस्योद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति। [५] "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्युद्गातरि प्राणाध्यासं निर्दिश्य [५] "य एवं वेद" इत्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते; अतश्च रूपभेदः। नचोद्गातर्युपास्ये विहिते [४] "उद्गीथेनात्ययाम" इत्याख्यायिकोपक्रमविरोधश्शङ्कनीयः, उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात्तस्यापि परपरिभवाख्यं फलं प्रति हेतुत्वात्। अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। परोवरीयस्त्वादिवत्—[६] यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि। ३। ३। ८॥

उद्गीथविद्येति संज्ञैक्यात् तत्-विद्यैक्यमुक्तं चेत्—तत्-संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे, कुण्डपायिनामयना-

---

१. छा. १-१-१० ॥—२. छा. १-२-१॥—३. छा. १-२-७॥—४. बृ. ३-३-१॥—५. बृ. ३-३-७ ॥—६. यथैकस्यामेव. पा ॥

ग्निहोत्रेच ; यथाचोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् । ३ । ३ । ९ ॥

छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य १"तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम् । अवयवे च समुदायशब्दः 'पटो दग्धः' इत्यादिषु दृश्यते । अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्दनिर्दिष्ट इति स एव प्राणदृष्ट्योपास्यश्छान्दोग्ये प्रतिपत्तव्यः। वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ ९ ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्यथात्वाधिकरणम् ॥ २ ॥

---

पूर्वकाण्डोक्तं स्वीकृत्यात्र वक्तव्यमाह—

वेदान्तसारे—अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥ वाजिनां छन्दोगानाञ्चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं हि विहितम् ; तत्र विद्यैक्यं पूर्वपक्षं हृदि निधाय राद्धान्तच्छायया चोदयति । वाजिनां प्राणदृष्ट्योपासनमुद्गीथकर्तृविषयमितरत्र कर्मविषयमिति शब्दादेव प्रतीयते ; २"अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य उदगायत्" इत्यादिनोद्गीथकर्तृविषयं वाजिनाम् ; छन्दोगानान्तु ३"य एवायम्मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" ४ इत्युद्गीथविषयमिति चेत्—तदिदमाह—अन्यथात्वं शब्दादितिचेदिति न, उपक्रमाविशेषात् ५"हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इत्येकत्र, अन्यत्रापि १"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इति ॥ ६ ॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ नैवं, प्रकरणं ह्युभयत्र भिद्यते ६"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथावयवभूतप्रणवविषयं छ-

१. छा. १-२-१ ॥—२. बृ. ३-३-७ ॥—३. छा. १-२-७ ॥—४. इत्युद्गीथकर्मविषय. पा ॥—५. बृ. ३-३-१ ॥—६. छा. १-१-१ ॥

न्दोगानाम्; १"हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इति तु वाजिनां कृत्स्नोद्गीथविषयमिति रूपभेदाद्विद्याभेदः। यथा एकस्यामपि शाखायामुद्गीथोपासने हिरण्मयपुरुषदृष्टेः परोवरीयस्त्वादिविशिष्टदृष्टिर्भिद्यते ॥ ७ ॥

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥** उद्गीथविद्येति संज्ञैक्याद्विद्यैक्यमुक्तञ्चेत्—विधेयभेदेऽपि संज्ञैक्यमस्त्येव; यथा नैयमिकाग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे चेत्येवमादिषु ॥ ८ ॥

**व्याप्तेश्च समञ्जसम् ॥** प्रथमप्रपाठके उपक्रमवदुत्तरास्वपि प्रणवस्योपास्यत्वव्याप्तेः मध्ये च २"उद्गीथमुपासाञ्चक्रिरे" इति प्रणवविषयत्वमेव समञ्जसम् ॥ ९ ॥

इति वेदान्तसारे अन्यथात्वाधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—**अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥** अस्ति ह्युद्गीथविद्या वाजिनां छन्दोगानां च; वाजिनां तावत् १"हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इत्यारभ्य उद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विहितम्; छन्दोगानामपि ३"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्यारभ्य, उद्गीथे प्राणदृष्ट्योपासनमेव शत्रुपरिभवफलमुक्तम्। किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति संशयः। चोदनाद्यविशेषाद्विद्यैक्यमिति पूर्वः पक्षः। राद्धान्तस्तु—यद्यप्युभयत्रोद्गीथे प्राणदृष्ट्योपासनमविशिष्टमुक्तम्, तथापि छन्दोगानाम् ४"ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृत्य ३"उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथावयवे प्रणवे प्राणदृष्ट्योपासनमुक्तम्; वाजिनान्तु १"हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इत्युपक्रमादविशेषेण कृत्स्नोद्गीथे प्राणदृष्ट्योपासनमुक्तम्।२"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति छन्दोगानामुद्गानकर्मण्युद्गीथावयवे प्रणवे प्राणदृष्टिविधानात्, वाजिनां तु ५"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इति कृत्स्नोद्गीथस्य कर्तरि प्राणदृष्टिविधानाच्चोभयत्र रूपभेदाद्विद्याभेद इति ॥

सूत्रार्थस्तु—अन्यथात्वं शब्दादितिचेदिति राद्धान्तच्छायया परिचोद्य, नाविशेषादिति पूर्वपक्षी परिहरति। २"अथ ह य एवायं मुख्यः प्राणस्तमुद्गी-

---

१. बृ ३-३-१ ॥—२. छा. १-२-७ ॥—३. छा. १-२-१ ॥—४. छा. १-१-१ ॥—५. बृ. ३-३-७ ॥

थमुपासाञ्चक्रिरे" १"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्येकत्रोद्गीथे प्राणदृष्टिशब्दात्, इतरत्रोद्गातरि प्राणदृष्टिशब्दाच्च, रूपान्यथात्वमितिचेत्—न रूपभेदः; कुतः? अविशेषात्—उपक्रमे ह्यविशेषेण २"उद्गीथेनात्ययाम" ३"उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथस्यैवोपास्यत्वप्रतीतेः। ४"त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इति कर्मण्येवोद्गीथे कर्तृत्वमुपचर्यत इति युक्तम्; अन्यथोपक्रमविरोधस्स्यात्॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्॥ नचैतदस्ति—यद्रूपैक्याद्विद्यैक्यमिति; कुतः? प्रकरणभेदात्—छान्दोग्येहि ५"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथावयवभूतं प्रणवमुपास्यं प्रकृत्य, ३ "उद्गीथमाजह्रुः" इति वचनादुद्गीथावयवभूतः प्रणव एवोद्गीथशब्देनोच्यत इत्यवगम्यते; वाजसनेयके त्वविशेषेण २"उद्गीथेनात्ययाम" इत्युपक्रमात् कृत्स्नोद्गीथ उपास्यः प्रकृतः; अत उद्गीथे प्राणदृष्ट्यविशेषेऽपि रूपभेदाद्विद्याभेदः। परोवरीयस्त्वादिवत्—यथैकस्यामपि शाखायाम् उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात्परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरमिति रूपभेदः; तद्वदत्रापि। एवं प्रकरणभेदेनोपक्रम एवैकत्रोद्गीथावयवविषयत्वेनान्यत्र कृत्स्नोद्गीथविषयत्वेन चोपासनभेदे सिद्धे सत्युपसंहारस्थं कर्मविषयं कर्तृविषयं च प्राणदृष्टिविधानं यथाश्रुतमवतिष्ठत इत्यभिप्रायः॥ ७॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥ उद्गीथविद्येति संज्ञैक्यात् तत् विधेयैक्यमुक्तं चेत्-तत् संज्ञैक्यं विधेयभेदेऽपि अस्ति तु-अस्त्येवेत्यर्थः;यथा नित्याग्निहोत्रे,कुण्डपायिनामयनाग्निहोत्रेच; यथाच छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासूद्गीथविद्येति संज्ञैक्यम्॥ ८॥

व्याप्तेश्च समञ्जसम्॥ प्रथमप्रपाठके उपक्रमवदुत्तरास्वप्युद्गीथविद्यासूद्गीथावयवस्य प्रणवस्यैवोपास्यत्वव्याप्तेर्मध्यगतस्य ३"तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्यापि प्रणवविषयत्वमेव समञ्जसम्॥ ९॥

इति वेदान्तदीपे अन्यथात्वाधिकरणम्॥ २॥

---

१. बृ. ३-३-७॥—२. बृ. ३-३-१॥—३. छा. १-२-१॥—४. बृ. ३-३-७॥—५. छा. १-१-१॥

# सर्वाभेदादन्यत्रेमे । ३ । ३ । १० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्या आम्नायते १"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" इत्यादि । तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुश्श्रोत्र-मनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य वागादिसम्बन्धितया श्रुतान्वसिष्ठत्वादीन् गुणांश्च प्राण-सम्बन्धितया प्रतिपादयति । एवं छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्य-गुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते । कौषीतकिनां तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः ; न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः। तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति। किं युक्तम्? भिद्यत इति । कुतः? रूपभेदात् । यद्यप्युभयत्र प्राण एव जैष्ठ्यश्रैष्ठ्यगुणक उपास्यः ; तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते ; इतरत्र तु तद्विधुर इत्युपास्यरूपभेदाद्विद्याभेदः—

( सिद्धान्तः )

इति प्राप्ते ब्रूमः—सर्वाभेदादन्यत्रेमे-नात्र विद्याभेदः, अन्यत्र कौषीतकिनां प्राणविद्यायामपि इमे—वसिष्ठत्वादयो गुणा उपास्यास्सन्ति; कुतः ? सर्वाभेदात्—प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात्। तथाहि—छन्दोगवाजसनेयिनां प्राणविद्यायाम् २" एता ह वै देवता अहंश्रेयसे व्यूदिरे" ३" अहंश्रेयसे विवदमानाः" इति चोपक्र-

१. छा. ५-१-१ ॥—२. छा. ५-१-६ ॥—३. बृ. ८-१-७ ॥

म्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय सर्वेषां प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्यमुपपादितम् । एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम् [1]"अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि" इत्यादिना वागादिभिरनूद्यते । कौषीतकिनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः । [2]"अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठः" इत्यादिना वागादिगता गुणा वागादयश्च देहश्च प्राणधीना इति प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतम् । नैतावता रूपभेदः, वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात् । तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम् ; यद्वागादिवासिष्ठत्वादिहेतुत्वम्। अतोऽत्रापि वसिष्ठत्वादिगुणयोगात्प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः ।। १० ।।

इति श्रीशारीरकमीमांसाभाष्ये सर्वाभेदाधिकरणम् ।। ३ ।।

---

वेदान्तसारे—सर्वाभेदादन्यत्रेमे ।। [3]"यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद.. प्राणो वा वं ज्येष्ठश्च श्रेष्ठश्च" इति वाजिनां छन्दोगानां कौषीतकिनाञ्च प्राणविद्यायां वागादिकरणग्रामस्थितेः तत्कार्यस्य च प्राणहेतुकत्वेन तिसृष्वप्येकरूपेण प्राणज्यैष्ठ्यमुपपादितम्; वागादिगतवसिष्ठत्वादिसम्बन्धित्वमपि प्राणस्योभयत्रोक्तम्; कौषीतकिनान्तु तन्नोक्तम्; तथाऽपि सर्वत्र ज्यैष्ठ्योपपादनप्रकारस्य सर्वस्याभेदाद्विद्यैक्यमिति कौषीतकिप्राणविद्यायामपि वसिष्ठत्वादय उपसंहार्याः ॥ १० ॥

इति वेदान्तसारे सर्वाभेदाधिकरणम् ॥ ३ ॥

---

१. छा. ५-१-१३ ॥—२. ॥—३. छा. ५-१-१ ॥—

वेदान्तदीपे—सर्वाभेदादन्यत्रेमे ॥ १"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" इति छन्दोगानां वाजिनां कौषीतकिनां च प्राणविद्याऽऽम्नाता। तत्र छान्दोग्यवाजसनेयकयोस्स वस्यैक्यात्प्राणविद्यैकैव। कौषीतकिप्राणविद्यायास्तस्याश्च भेदोऽस्ति, उत नास्तीति संशयः। अस्ति भेद इति पूर्वःपक्षः। यद्यपि सर्वत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण एक एवोपास्यः; तथापि छन्दोगानां वाजसनेयिनां च ज्यैष्ठ्यश्रैष्ठ्यगुणकस्य प्राणस्य वागादिगतवसिष्ठत्वादिगुणसम्बन्धित्वमपि शब्दादेव प्रतीयते। कौषीतकिनां तु न तथेति रूपभेदाद्विद्याभेदः। राद्धान्तस्तु—यद्यपि कौषीतकिप्राणविद्यायां वागादिगतवसिष्ठत्वादिसम्बन्धित्वमपि प्राणस्य शब्दान्नाभिहितम्; तथापि तत्रापि प्राणस्य ज्यैष्ठ्यश्रैष्ठ्योपपादनं वागादीनां स्थितेः तत्तत्कार्यस्य च प्राणाधीनत्वेनेत्येतदविशिष्टमिति वागादिगतवसिष्ठत्वादेरपि प्राणहेतुकत्वानुसन्धानेन विना प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानमनुपपन्नमिति कौषीतकिप्राणविद्यायामपि वागादिगतवसिष्ठत्वादिसम्बन्ध्येव प्राण उपास्य इति रूपाभेदाद्विद्यैक्यम् ॥

सूत्रार्थस्तु—सर्वाभेदादन्यत्रेमे—अन्यत्र-कौषीतकिप्राणविद्यायामपि, इमे-वसिष्ठत्वादयस्सन्त्येव। कुतः? सर्वाभेदात्-प्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात्। वागादीनां स्थितेः *कार्यस्य च प्राणहेतुकत्वेन हि प्राणस्य ज्यैष्ठ्यं श्रैष्ठ्यं चात्राप्युपपादितम्। अतो वागादिगतकार्यसामर्थ्यरूपवसिष्ठत्वादिसम्बन्धित्वं प्राणस्यात्राप्युक्तमेवेत्यर्थः ॥ १० ॥

इति वेदान्तदीपे सर्वाभेदाधिकरणम् ॥ ३ ॥

---

## ( श्रीशारीरकमीमांसाभाष्ये आनन्दाद्यधिकरणम् ॥ ४॥ )

---

प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते। यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिः; तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते; ते ब्रह्मविद्यासु सर्वास्वप्यनुसन्धेया इत्ययमर्थः प्रतिपाद्यते—

---

१. छा. ५-१-१ ॥ *तत्कार्ये. पा ॥

## आनन्दादयः प्रधानस्य । ३ । ३ । ११ ॥

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति, नेति विचार्यते। अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात्प्रकरणश्रुतानामेवोपसंहार इति ॥

( सिद्धान्तः )

एवं प्राप्ते ब्रूमः– आनन्दादयः प्रधानस्य-अभेदादिति वर्तते ; प्रधानस्य गुणिनो ब्रह्मणस्सर्वेषूपासनेष्वभेदात्,गुण्यपृथग्भावाद्गुणानां, सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः ॥ ११ ॥

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत्प्रियशिरस्त्वादयोऽपि [१]"तस्य प्रियमेव शिरः" इत्यादौ ब्रह्मगुणत्वेन श्रुतास्सर्वत्र प्रसज्येरन्; नेत्याह—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । ३ । ३ । १२ ॥

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः, तेषामब्रह्मगुणत्वात् ; ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात्प्रियशिरस्त्वादीनाम् । अन्यथा शिरःपक्षपुच्छाद्यवयवभेदे सति ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम् । तथा च सति [२]"सत्य ज्ञानमनन्तं ब्रह्म" इत्यादि विरुध्यते ॥ १२ ॥

नन्वेवमेव ब्रह्मसम्बन्धिनामैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां गुणानामनन्तानां गुण्यपृथक्स्थितत्वमात्रेण तत्राश्रुतानामप्युपसंहारे सर्वे सर्वत्र प्रसज्येरन्, आनन्त्यादुपसंहाराशक्तिश्च; तत्राह—

## इतरे त्वर्थसामान्यात् । ३ । ४ । १३ ॥

---

१. तै. आ. ५-२ ॥—२. तै. आ. १. अनु. १ ॥

तुशब्दश्चोद्यं व्यावर्तयति ; इतरेतु - आनन्दादयः अर्थसामान्यात्सर्वत्रानुवर्तन्ते । ये त्वर्थसमानाः - अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनः ; तेऽर्थस्वरूपवत्सर्वत्रानुवर्तन्ते । ते च गुणास्सत्यज्ञानानन्दामलत्वानन्तत्वानि । १"यतो वा इमानि" इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म २"सत्यं ज्ञानमनन्तं ब्रह्म"३"आनन्दो ब्रह्म" इत्यानन्दादिभिर्हि स्वरूपतो निरूप्यते । अत उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोऽनुवर्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः;तेषां गुण्यपृथक्स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात्-ये यत्र श्रुताः, ते तत्रोपसंहार्याः-इति निरवद्यम् ॥ १३ ॥

यस्तूपचयापचयप्रसङ्गात्प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वरूपणमात्रार्थाः ; न तु ब्रह्मगुणाः। तर्ह्यतथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते ; अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यम् ; यथा ४"आत्मानं रथिनं विद्धि" इत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वरूपणम् उपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम् । नचेह तथाविधं किञ्चित्प्रयोजनं दृश्यते इति बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यम् । तत्राह–

## आध्यानाय प्रयोजनाभावात् । ३ । ३ । १४ ॥

प्रयोजनान्तराभावादाध्यानायायं रूपणोपदेशः क्रियते । आध्यानम् अनुचिन्तनम्, उपासनमुच्यते। २"ब्रह्मविदाप्नोति परम्" इत्यत्रोपदिष्टाध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थमानन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोपदिश्यते । यथाऽन्नमयः पुरुषः अयं देहः शिरःपक्षादिभिः २"तस्येदमेव शिरः" इ-

१. तै. भृगु. १. अनु ॥---२. तै. आ. १. अनु-१ ॥—३. तै. भृगु. ६. अनु ॥ —४. कठ. १-अ. ३-३ ॥

-आदिना बुद्धावारोप्यते; यथा च प्राणमयमनोमयविज्ञानमयाः १"तस्य प्राण एव शिरः"इत्यादिना प्राणाद्यवयवैर्बुद्धावारोप्यन्ते; एवमेभ्योऽर्थान्तरभूतस्तदन्तरात्मा आनन्दमयोऽपि प्रियमोदादिभिरेकदेशैः शिरःप्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते । एवमानन्दमयोपलक्षणत्वात्प्रियशिरस्त्वादीनां न सर्वदा आनन्दमयप्रतीतावनुवर्तन्ते ॥ १४ ॥

## आत्मशब्दाच्च । ३ । ३ । १५ ॥

२"अन्योऽन्तर आत्माऽऽनन्दमयः"इत्यात्मशब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छासम्भवात्प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥

ननु ३"अन्योऽन्तर आत्मा प्राणमयः" ४"अन्योऽन्तर आत्मा मनोमयः"इत्यात्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वात् २"अन्योऽन्तर आत्माऽऽनन्दमयः"इत्यात्मशब्दस्य परमात्मविषयत्वं कथं निश्चीयते? तत्राह—

## आत्मगृहीतिरितरवदुत्तरात् । ३ । ३ । १६ ॥

२"अन्योऽन्तर आत्माऽऽनन्दमयः"इत्यत्रात्मशब्देन परमात्मन एव ग्रहणम्; इतरवत्—यथेतरत्र५"आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजै" इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणम्; तद्वत् । कुत एतत्? उत्तरात्- ६"सोऽकामयत बहु स्यां प्रजायेय"इत्यानन्दमयविषयादुत्तराद्वाक्यात् ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् । ३ । ३ । १७ ॥

पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनान्नोत्तरान्निश्चेतुं शक्यत इति चेत्—स्यादवधारणात्—स्यादेव निश्चयः; कुतः? अवधारणात्

---

१. तै. आ. २-अनु. ३ ॥—२. तै. आन. ५-अनु. २ ॥—३. तै. आन. २-३ ॥ ४. तै. आन. ३-२॥—५. ऐतरेय. १-१-१॥—६. तै.आन. ६-२॥—

पूर्वत्रापि [१]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति परमात्मन एव बुद्ध्याऽवधारितत्वात् अन्नमयादनन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा;तदनन्तरं च प्राणमयादनन्तरे मनोमये;ततो विज्ञानमये; तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिस्तदन्तराभावादुत्तराच्च [२]"सोऽकामयत" इति वाक्यात्प्रतिष्ठितेत्युपक्रमेऽप्यपरमात्मनि परमात्मबुद्ध्या आत्मशब्दान्वयः इति निरवद्यम् ॥ १७ ॥

इति श्रीशारीरकमीमांसाभाष्ये आनन्दाद्यधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—आनन्दादयः प्रधानस्य ॥ अभेदादिति वर्तते; ब्रह्मस्वरूपनिरूपणान्तर्गतामलत्वज्ञानानन्दादयो गुणाः सर्वासु परविद्यासूपसंहार्याः, गुणिनो ब्रह्मणस्सर्वत्राभेदात् ॥ ११ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ [३]"तस्य प्रियमेव शिरः" इति प्रियशिरस्त्वादीनामप्राप्तिः, ब्रह्मगुणत्वाभावात्तेषाम् । शिरःपक्षादिभेदे ब्रह्मगुणे सति ब्रह्मण उपचयापचयप्रसक्तिः ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ आनन्दादयः स्वरूपनिरूपणान्तर्गततया ब्रह्मसमाना इत्युपसंहार्या एव ॥ १३ ॥

आध्यानाय प्रयोजनाभावात् ॥ प्रियशिरस्त्वाद्युपदेशः ब्रह्मणोऽनुचिन्तनार्थः, प्रयोजनान्तराभावात् ॥ १४ ॥

आत्मशब्दाच्च ॥ [३]"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्दाच्च शिरःपक्षादयो न ब्रह्मगुणाः ॥ १५ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ परमात्मन एवात्मशब्देन ग्रहणमिति [२]"सोऽकामयत बहु स्यां प्रजायेय"इत्युत्तरात् बहुभवनसङ्कल्पाभिधायिनो वाक्यादवगम्यते ; [४]"आत्मा वा इदमेक एवाग्र आसीत्" इत्यात्मशब्दादिवत् ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ पूर्वत्र प्राणमयादिष्वात्मशब्दान्वयात्कथमुत्तरान्निर्णय इति चेत्—[१]"आत्मन आकाशस्सम्भूतः" इत्यवगत-

---

१. तै.आन.१-अनु.२ ॥—२. तै. आ. ६-अनु. २ ॥—३. तै. आन-५-२ ॥—
—४. ऐतरेय. १-अनु. १-खं. १ ॥

स्यात्मन एव प्राणमयादिष्ववधारणात् स्यादेव परमात्मैवेति निर्णयः ॥ १७ ॥

इति वेदान्तसारे आनन्दाद्यधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—आनन्दादयः प्रधानस्य॥सत्यज्ञानानन्दामलत्वानन्तत्वरूपाः ब्रह्मस्वरूपनिरूपकगुणाः सर्वासु परविद्यासूपसंहर्तव्याः,उत नेति संशयः। नोपसंहर्तव्या इति पूर्वः पक्षः, अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात्, ब्रह्मगुणानामसंख्येयत्वेनोपसंहाराशक्तेश्च। राद्धान्तस्तु—ज्ञानानन्दादीनां ब्रह्मस्वरूपनिरूपकगुणत्वेन तैर्विना ब्रह्मस्वरूपानुसन्धानानुपपत्तेः सर्वासूपसंहर्तव्याः—इति। सूत्रार्थस्तु—सर्वाभेदादित्यतोऽभेदादिति वर्तते ; आनन्दादयो गुणाः सर्वासूपसंहर्तव्याः, प्रधानस्य—गुणिनो ब्रह्मणस्सर्वासु विद्यास्वभेदात्। सर्वासु परविद्यासु ब्रह्मैकमेवानुसन्धेयं चेत्,यैर्गुणैर्विना ब्रह्मस्वरूपानुसन्धानमशक्यम्; ते च ज्ञानानन्दादयोऽनुसन्धेया इत्यर्थः ॥ ११ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ आनन्दादीनां प्राप्तावपि [1]"तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः" इति प्रियशिरस्त्वादीनामप्राप्तिः, ब्रह्मस्वरूपगुणत्वाभावात्तेषाम्। ब्रह्मणश्शिरःपक्षादिभेदे स्वरूपे सति ब्रह्मण उपचयापचयौ प्रसज्येयाताम्। ततश्च [2]"सत्यं ज्ञानमनन्तं ब्रह्म" [3]"आनन्दोऽजरः" इत्यादिर्विरुध्यते ॥ १२ ॥

प्रियशिरस्त्वादिभ्य आनन्दादीनां विशेषमाह—

इतरे त्वर्थसामान्यात् ॥ इतरे - आनन्दादयः अर्थसामान्यात् - ब्रह्मस्वरूपसामान्यात्सर्वास्वनुवर्तन्ते । ब्रह्मस्वरूपनिरूपरूपणधर्मत्वेन ब्रह्मस्वरूपसमाना हि ते ॥ १३ ॥

प्रियशिरस्त्वादयो ब्रह्मस्वरूपधर्मा न भवन्ति चेत्—तदभिधानं किमर्थमित्यत आह—

अध्यानाय प्रयोजनाभावात् ॥ अनुचिन्तनार्थे तदभिधानं, प्रयोजनान्तराभावात्। [4]"ब्रह्मविदाप्नोति परम्" इति वेदितव्यतयोपदिष्टं ब्रह्मानन्दमयं प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वा बुद्धावारोप्यत इत्यर्थः ॥ १४ ॥

---

१. तै. आन. ५-२ ॥—२. तै. आन. १-१ ॥ —३. कौषी. ३-९ ॥ —४. तै. आन. १-अनु. १ ॥

आत्मशब्दाच्च ॥ १"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः; शिरःपक्षादयो हि नात्मधर्माः ॥ १५ ॥

आत्मगृहीतिरितरवदुत्तरात्॥ १"अन्योऽन्तर आत्मा" इत्यात्मशब्देन परमात्मन एव गृहीतिः—ग्रहणम्; इतरवत् २"आत्मा वा इदमेक एवाग्र आसीत्" इत्यात्मशब्देन यथा परमात्मनो ग्रहणम्, तद्वत्। कथमिदमवगम्यते?, तदेकार्थादुत्तरात् ३"सोऽकामायत बहु स्यां प्रजायेय" इत्यादिवाक्यात् ॥१६॥

अन्वयादिति चेत्स्यादवधारणात्॥ पूर्वेषु ४"अन्योऽन्तर आत्मा प्राणमयः" इत्यादिवाक्येष्वनात्मस्वप्यात्मशब्दान्वयात्कथमुत्तरवाक्यान्निर्णय इति चेत्—५"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति प्रकृतस्यात्मन एव प्राणमयादिष्वानन्दमयपर्यन्तेषु आत्मशब्देनावधारणात् स्यादेव निर्णयः। अतः प्रियशिरस्त्वादीनामनात्मधर्मत्वात्, ज्ञानानन्दादीनामात्मस्वरूपनिरूपणधर्मत्वाच्च, तेषामेव सर्वत्रोपसंहारः ॥ १७ ॥

इति वेदान्तदीपे आनन्दाद्यधिकरणम् ॥ ४ ॥

---

(श्रीशारीरकमीमांसाभाष्ये कार्याख्यानाधिकरणम् ॥ ५ ॥)

---

## कार्याख्यानादपूर्वम् । ३ । ३ । १८ ॥

पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते। छान्दोग्यवाजसनेयकयोः ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यमुक्त्वा प्राणस्य वासस्त्वेनापोऽभिधीयन्ते। छान्दोग्ये तावत् ६"स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति" इति। वाजसनेयके ७"किं मे वासः" इति प्राणेन पृष्टा वागादयः ऊचुः ७"आपो वास इति तद्विद्वांसश्श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो

---

१. तै. आन. ५-अनु. २ ॥—२. ऐतरेय. १-अ. १-खं. १॥—३. तै.आन-६-२॥—४. तै. आन. २-अनु. २ ॥—५. तै. आन. १-अनु. २ ॥—६. छा. ५-२-२ ॥—७. बृ. ८-१-१४ ॥

मन्यन्ते" १"तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" इति। तत्र संशयः—किमत्राचमनं विधीयते, उतापां प्राणवासस्त्वानुसन्धानमिति। १"अशिष्यन्नाचामेदशित्वा चाचामेत्" इत्याचमने विधिप्रत्ययश्रवणात्, १"एतमेव तदनमनग्नं कुरुते" इति वेदने विधिप्रत्ययाभावादनग्नतासङ्कीर्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च, भोजनाङ्गस्याचमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात्प्राणविद्याङ्गमाचमनान्तरं विधीयते—

( सिद्धान्तः )

इति प्राप्ते ब्रूमः—आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेवेह अपूर्वम्—अप्राप्तं विधीयते, कार्याख्यानात्—अप्राप्ताख्यानात्, अप्राप्ताख्याने शब्दस्यार्थवत्त्वादित्यर्थः। एतदुक्तं भवति—२"किं मे वासः" २"आपो वासः" ३"अद्भिः परिदधति" १"एतमेव तदनमनग्नं कुरुते" इत्युपक्रमोपसंहारयोर्वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेराचमनस्य स्मृत्याचारप्राप्तत्वादाचमनमनूद्याचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयते इति। अत एव च्छान्दोग्ये ३" तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति" इत्यद्भिः परिधानमेवोक्तम्; नाचमनम्॥

इति श्रीशारीरकमीमांसाभाष्ये कार्याख्यानाधिकरणम्॥ ५॥

---

वेदान्तसारे—कार्याख्यानादपूर्वम्॥ ४" यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद" इति प्राणविद्यां विधाय अपां प्राणवासस्त्वमुक्त्वा १"तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" इत्याचमनस्य सदाचारप्राप्तत्वादाचमनमनूद्य आचमनीयानामपां प्राणवासस्त्वानुसन्धानमप्राप्तं विधीयते इति युक्तम्, अप्राप्तस्यैव विधेयतया ख्यापनात्। अत्रानुवादस्वरूपो वि-

---

१॥—२. बृ. ८-१-१४॥ —३. छा. ५-२-२॥ —४. बृ. ८-१-१॥

धिः कल्प्यते इत्यर्थः ॥ १८ ॥

इति वेदान्तसारे कार्याख्यानाधिकरणम् ॥ ५ ॥

---

वेदान्तदीपे—कार्याख्यानादपूर्वम् ॥ छान्दोग्यवाजसनेयकयोः ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यं विधाय १"सहोवाच किं मे वासो भविष्यतीत्याप इति होचुः" इत्यपां प्राणस्य वासस्त्वमुक्त्वा १"तस्माद्वा एदतशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति" इति च्छान्दोग्ये। वाजसनेयके चापां प्राणवासस्त्वमुक्त्वा२"तस्मादेवंविदशिष्यन्ना-चामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" इति। आचमनेन प्राणमनग्नं कुरुत इत्यर्थः। अत्राशनात्पुरस्तादुपरिष्टाच्च किमाचमनं प्राणविद्याङ्गं विधीयते, उताचमनीयानामपां प्राणवासस्त्वानुसन्धानं विधीयत इति संशयः। २"आचामेत्" इत्याचमने विधिप्रत्ययश्रवणात्, स्मृत्याचारप्राप्तादाचमनादाचमनान्तरं प्राणविद्याङ्गं विधीयत इति पूर्वः पक्षः। राद्धान्तस्तु—२"अशित्वा चाचामेत्" इत्याचमनं चात्र प्रतीयते; आचमनीयानामपां प्राणवासस्त्वानुसन्धानं च ३"आपो वासः" १"अद्भिः परिदधति" २"एतमेव तदनमनग्नं कुरुते" इति प्रतीयते। तत्राचमनं तावत् स्मृत्याचारप्राप्तम्; अपां प्राणवासस्त्वानुसन्धानमप्राप्तम्। ३"अनग्नं कुर्वन्तो मन्यन्ते" २"अनग्नं कुरुते" इत्यनुवादस्वरूपं प्रतीयते। तत्राचमनान्तरकल्पनादाचमनमनूद्याचमनीयानामपां प्राणवासस्त्वानुसन्धानमप्राप्तं विधीयत इति युक्तम्। २"तदनमनग्नं कुरुते" इति ४"वचनानि त्वपूर्वत्वात्" ५"विधिर्वा स्यादपूर्वत्वात्" इति न्यायेन विधिवचनमेव भवति। सूत्रार्थस्तु—अपूर्वम् अप्राप्तमपां प्राणवासस्त्वानुसन्धानं विधेयम्, न पुनः प्राप्तमाचमनम्। कुतः? कार्याख्यानात्—कार्यस्य अप्राप्तार्थस्याख्यानस्वभावत्वाच्छास्त्रस्येत्यर्थः ॥ १८ ॥

इति वेदान्तदीपे कार्याख्यानाधिकरणम् ॥ ५ ॥

---

१. छा. ५-२-२ ॥—२ ॥ —३. बृ. ८-१-१४ ॥—४. पूर्वमीमांसा. ३-५-२१ ॥ —५. पूर्वमीमांसा. ३-४-१२ ॥

—••◆( श्रीशारीरकमीमांसाभाष्ये समानाधिकरणम् ॥ ६ ॥ )◆••—

# समान एवं चाभेदात् । ३ । ३ । १९ ॥

वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्याऽऽम्नाता[१] "सत्यं ब्रह्मेत्युपासीत अथ खलु क्रतुमयोऽयं पुरुषः" इत्यारभ्य [१] "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानम्" इति । तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याऽऽम्नायते [२]"मनोमयोऽयं पुरुषो भास्सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति यदिदं किञ्च" इति । तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति । संयोगचोदनाख्यानामविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदाद्विद्याभेदः—

—••◆(सिद्धान्तः)◆••—

इति प्राप्त उच्यते—समान एवमिति । यथाऽग्निरहस्ये मनोमयप्राणशरीरभारूपसत्यसङ्कल्पत्वगुणगणः श्रुतः; एवं बृहदारण्यकेऽपि मनोमयत्वादिके समाने सत्यधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणाभेदान्न रूपभेदः; अतो विद्यैक्यम् ॥ १९ ॥

इति श्रीशारीरकमीमांसाभाष्ये समानाधिकरणम् ॥ ६ ॥

———

वेदान्तसारे—समान एवं चाभेदात्॥ अग्निरहस्ये बृहदारण्यके चाम्नाता शाण्डिल्यविद्या एकत्र [१]" स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानम् " इति । इतरत्र [२]" मनोमयोऽयं पुरुषो भास्सत्यन्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति" इति । उभयत्र मनोमयत्वादिके समानेऽपि वशित्वादेस्सत्यसङ्कल्पत्वविततिरूपेणाभेदादैक्यम् ॥ १९ ॥

इति वेदान्तसारे समानाधिकरणम् ॥ ६ ॥

———

१. वाजसनेयके. अग्निरहस्ये ॥—२. बृ. ७-६-१ ॥

वेदान्तदीपे—समान एवंचाभेदात्॥ वाजसनेयकेऽग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्याऽऽम्नाता । अग्निरहस्ये तावत् १"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानम्" इति। बृहदारण्यके च २"मनोमयोऽयं पुरुषो भास्सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति' इति। किमत्र विद्याभेदः, उत नेति संशयः । एकत्र सत्यसङ्कल्पत्वमधिकं श्रुतम् ; इतरत्र वशित्वादयोऽधिका इतिरूपभेदाद्विद्याभेद इति पूर्वः पक्षः। राद्धान्तस्तु—उभयत्र मनोमयत्वादिके समाने सति वशित्वादेस्सत्यसङ्कल्पत्वविततिरूपतया तेनाभेदान्न रूपभेद इति विद्यैक्यम् । सूत्रार्थस्तु—मनोमयत्वादिके समाने सति विद्यैक्यम् , एवं चाभेदात्—वशित्वादिगुणेनाप्यभेदात् ; वशित्वादिर्हि सत्यसङ्कल्पत्वविततिः ॥ १९ ॥

इति वेदान्तदीपे समानाधिकरणम् ॥ ६ ॥

---

(श्रीशारीरकमीमांसाभाष्ये सम्बन्धाधिकरणम् ॥ ७ ॥)

---

# सम्बन्धादेवमन्यत्रापि । ३ । ३ । २० ॥

बृहदारण्यके श्रूयते—३"सत्यं ब्रह्म" इत्युपक्रम्य ४"तद्यत्सत्यमसौ स आदित्यो य एषएतस्मिन् मण्डले पुरुषोयश्चायं दक्षिणेऽक्षिन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा ५"तस्योपनिषदहरित्यधिदैवतम्" ५"तस्योपनिषदहमित्यध्यात्मम्" इति द्वे उपनिषदौ—रहस्यनामनी उपासनशेषतयाऽऽम्नायेते; ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते, उतोभयत्रोभे अनियमेनेति संशये सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोस्सम्बन्धादुपास्यैक्येन रूपाभेदात्संयोगाद्यभेदाच्च विद्यैक्यादनियमेने-

---

१. ॥—२. बृ. ७-६-१ ॥—३. बृ.७-४-२॥—४. बृ. ७-५-१॥—५. बृ. ७-५-३ ॥

ति प्राप्तम् । तदिदमुच्यते—सम्बन्धादेवमन्यत्रापीति । यथा मनोमयत्वादिगुणविशिष्टस्यैकत्वादुपास्यैक्येन रूपाभेदाद्विद्यैक्याद्गुणोपसंहारः ; एवमन्यत्राक्ष्यादित्यसम्बन्धिनो ब्रह्मणस्सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहारः ॥ २० ॥

( सिद्धान्तः. )

एवं प्राप्ते प्रचक्ष्महे—

## न वा विशेषात् । ३ । ३ । २१ ॥

न वैतदस्ति—यद्विद्यैक्यादुपसंहारः—इति । कुतः ? विशेषात्—उपास्यरूपविशेषात् । ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्थतया उपास्यत्वम्, इतरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसम्बन्धित्वभेदेन रूपभेदाद्विद्याभेदः । नैवं शाण्डिल्यविद्यायाः उपास्यस्थानं भिद्यते, उभयत्र हृदयाधारत्वेनोपास्यत्वात् । अतो व्यवस्थिते इति ॥ २१ ॥

## दर्शयति च । ३ । ३ । २२ ॥

दर्शयति चाक्ष्याधारादित्याधारयोर्गुणानुपसंहारं [१]"तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन । स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये सम्बन्धाधिकरणम् ॥ ७ ॥

---

वेदान्तसारे—सम्बन्धादेवमन्यत्रापि ॥ [२]"य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्" इत्युपक्रम्य सत्यस्य ब्रह्मणः आदित्यमण्डले अक्षणि चोपास्यत्वमुक्त्वा, [३]"तस्योपनिषदहरित्यधिदैवतम्" [३]"तस्योपनिषदहमित्यध्यात्मम्" इति द्वे नामनी आम्नायेते ; उभयत्रैकस्यैवोपास्यस्य सम्बन्धाच्चमित्युभयत्रोभे नामनी ॥ २० ॥

न वा विशेषात् ॥ नैतत्, आदित्याक्षिस्थानसंबन्धभेदादुपास्यस्य विद्याभेद इति तत्र नियते नामनी ॥ २१ ॥

---

१. छा. १-७-५ ॥—२. बृ. ७-५-१ ॥—३. बृ. ७-५-३ ॥

दर्शयतिच ॥ दर्शयति च श्रुतिर्विद्याभेदम् १"तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इति रूपातिदेशं ब्रुवती ॥ २२ ॥

इति वेदान्तसारे सम्बन्धाधिकरणम् ॥ ७ ॥

---

वेदान्तदीपे—सम्बन्धादेवमन्यत्रापि ॥ बृहदारण्यके—२"य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा, ३"तस्योपनिषदहरित्यधिदैवतम्" ३"तस्योपनिषदहमित्यध्यात्मम्" इति द्वे रहस्यनामनी उपासनशेषतयाऽऽम्नायेते । ते किं यथाश्रुतस्थाननियते, उतोभयत्रोभे इति संशयः । उभयोस्स्थानयोरेकरूपस्यैवोपास्यत्वाद्विद्यैक्यमित्यनियते नामनी इति पूर्वःपक्षः। अक्ष्यादित्यस्थानसम्बन्धित्वरूपाकारभेदाद्रूपभेद इति विद्याभेदात् द्वे नामनी नियते इति राद्धान्तः । सूत्रार्थस्तु—यथा मनोमयत्वादिगुणविशिष्टस्यैकस्यैवोपास्यत्वेनोभयत्र विद्यैक्यम् ; एवमन्यत्राक्ष्यादित्याधारस्याप्येकस्यैव सत्यस्य ब्रह्मणस्स्थानद्वयसम्बन्धान्न रूपभेद इति विद्यैक्यात् द्वे नामनी अनियते ॥ २० ॥

न वा विशेषात् ॥ नचैतदस्ति—यद्विद्यैक्यादुभयत्रोभे नामनी अनियते इति । कुतः? विशेषात् । उभयत्र हि रूपं विशिष्यते, एकत्रादित्यस्थानसम्बन्धि, इतरत्राक्षिस्थानसम्बन्धि ब्रह्मेति रूपभेदाद्विद्याभेद इति नियते नामनी ॥ २१ ॥

दर्शयति च ॥ दर्शयति च श्रुतिर्विद्याभेदेन गुणानुपसंहारं १"तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन । स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥

इति वेदान्तदीपे सम्बन्धाधिकरणम् ॥ ७ ॥

---

(श्रीशारीरकमीमांसाभाष्ये सम्भृत्यधिकरणम् ॥ ८ ॥)

---

## सम्भृतिद्युव्याप्त्यपि चातः । ३ । ३ । २३ ॥

---

१. छा. १-७-५ ॥—२. बृ. ७-५-१ ॥—३. बृ. ७-५-२, ३ ॥

तैत्तिरीयके नारायणीयानां खिलेषु च [१]"ब्रह्म ज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमोऽत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति ब्रह्मणि ज्येष्ठानां वीर्याणां सम्भृतिः, द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम्। तेषामुपासनविशेषमनारभ्याधीतानां गुणानां सर्वासु विद्यासूपसंहारे प्राप्त उच्यते—

( सिद्धान्तः. )

सम्भृतिद्युव्याप्त्यपि—इति। सम्भृतिद्युव्याप्तीति समाहारद्वन्द्वत्वादेकवद्भावः। सम्भृत्यादिकमनारभ्याधीतमपि अत एव स्थानभेदाद्व्यवस्थाप्यम्; न सर्वत्रोपसंहर्तव्यम्। कथमनारभ्याधीतानां स्थानविशेषनियतत्वम्; स्वसामर्थ्यादिति ब्रूमः। द्युव्याप्तिस्तावद्धृदयाद्यल्पस्थानगोचरासु विद्यासु नोपसंहर्तुं शक्या; सम्भृत्यादयोऽपि तत्सहचारिणस्तत्तुल्यदेशा इत्यल्पस्थानविषयासु विद्यास्वनुपसंहार्याः। शाण्डिल्यदहरादिविद्यास्वल्पस्थानविषयासु [२]"ज्यायान् पृथिव्याः" [३]"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यादयस्तत्तत्राशक्योपसंहाराः मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः॥

इति श्रीशारीरकमीमांसाभाष्ये सम्भृत्यधिकरणम्॥ ८॥

---

वेदान्तसारे—सम्भृतिद्युव्याप्त्यपि चातः॥ [१]"ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठन्दिवमाततान" इत्यादिज्येष्ठानां वीर्याणां ब्रह्मणि संभृतिः द्युव्याप्तिश्च ब्रह्मण इत्येतदनारभ्याधीतमपि न सर्वोपासनशेषभूतम्; अतो द्युव्याप्तिसामर्थ्यादल्पस्थानव्यतिरिक्तेषूपासनेषु प्राप्नोति। संभृत्याद्यपि द्युव्याप्तिसहपठितं तत्रैव॥ २३॥

इति वेदान्तसारे सम्भृत्यधिकरणम्॥ ८॥

---

१. ॥—२. छा. ३-१४-३ ॥—३. छा. ८-१-३ ॥

वेदान्तदीपे-सम्भृतिद्युव्याप्त्यपि चातः॥तैत्तिरीयके नारायणीयानां खिलेषु च १"ब्रह्म ज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मभूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति ब्रह्मणि ज्येष्ठानां गुणानां सम्भृतिर्द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम्।किमेषां सर्वासु विद्यासूपसंहारः,उत स्थानविशेषोपासनेषु नियम इति संशयः।अनारभ्याधीतत्वादेषां सर्वासूपसंहारः—इति पूर्वः पक्षः। राद्धान्तस्तु-यद्यपि न स्थानविशेषसम्बन्ध्युपासनमारभ्याधीता एते ; तथापि द्युव्याप्तिसामर्थ्यात्तस्य हृदयाद्यल्पस्थानेषूपसंहारायोगात् तत्साहचर्याच्चेतरेषामल्पस्थानविहितासु विद्यासु नोपसंहारः—इति।सूत्रार्थस्तु—सम्भृतिद्युव्याप्तीति—समाहार२द्वन्द्वैकवद्भावः । सम्भृतिप्रभृतिगुणजातमप्यत एव स्थानविशेषसम्बन्धनियमान्नियतम् ; न सर्वत्रोपसंहार्यम् । द्युव्याप्तिर्हि स्वसामर्थ्यादल्पस्थानानर्हतया तदितरस्थाननियता । सम्भृत्याद्यपि तत्साहचर्यात्तथैव ॥ २३ ॥

इति वेदान्तदीपे सम्भृत्यधिकरणम् ॥ ८ ॥

---

( श्रीशारीरकमीमांसाभाष्ये पुरुषविद्याधिकरणम् ॥ ९ ॥ )

---

# पुरुषविद्यायामपि चेतरेषामनाम्नानात्॥३।३।२४॥

तैत्तिरीयके पुरुषविद्याऽऽम्नायते ३"तस्यैवंविदुषो यज्ञस्याऽऽत्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः" इत्यादिका । छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते ४"पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि" इत्यादिका । तत्र संशयः-किमत्र विद्या भिद्यते, उत नेति । पुरुषविद्येति नामैक्यात्पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात् तैत्तिरीयके फलसंयोगाश्रवणात् ५"प्र ह षोडशं वर्षशतं जीव-

---

१. यजु. २. अष्ट. ४-प्रश्न. ७-अनु॥—२. द्वन्द्वैकवद्भावः. पा ॥—३. तै. नारायणं. ५२-अनु ॥—४. छा. ३-१६-१ ॥—५. छा. ३-१६-७ ॥

ति" इति च्छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वात्फलसंयोगस्याप्यविशेषाद्विद्यैक्यम् ॥

( सिद्धान्तः. )

इति प्राप्त उच्यते—उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव ; कुतः ? इतरेषामनाम्नानात्—एकस्यां शाखायामाम्नातानां गुणानामन्यत्रानाम्नानात् । तथा हि [1]"यत्सायं प्रातर्मध्यन्दिने च तानि सवनानि" इत्यादयस्तैत्तिरीयके आम्नाताः छान्दोग्ये सवनत्वेन नाम्नायन्ते ; त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते ; छान्दोग्ये श्रुतानामशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम् ; यजमानपत्न्यादिपरिकल्पनं चान्यथा । अतो रूपमुभयत्र भिद्यते । तथा फलसंयोगोऽपि भिद्यते; तैत्तिरीयके हि पूर्वानुवाके [2]"ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत" इति ब्रह्मविद्यामभिधाय तत्फलत्वेन [2]"ब्रह्मणो महिमानमाप्नोति" इत्युक्त्वा [1]"तस्यैवं विदुषः" इत्यादिना आम्नाता पुरुषविद्याऽस्यैव ब्रह्मविदुषो यज्ञत्वकल्पनमिति गम्यते॥

अतो ब्रह्मविद्याङ्गत्वाद्ब्रह्मप्राप्तिरेवात्र फलम् ; [3]"फलवत्सन्निधावफलं तदङ्गम्" इति न्यायात्तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते । छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम् । अतो रूपसंयोगयोर्भेदाद्विद्याभेद इत्येकत्राम्नातानां गुणानामितरत्रानुपसंहारः ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये पुरुषविद्याधिकरणम् ॥ ९ ॥

---

वेदान्तसारे—पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ छान्दोग्ये तैत्तिरीयके चाम्नाता पुरुषविद्या भिन्ना, यजमानपत्न्यादीनां यज्ञावयवानामितरेषां सवनत्रयादीनां चैकत्राम्नातानामन्यत्रानाम्नानात्, फलभेदाच्च । तैत्तिरीयके आत्मादीनां यजमानत्वकल्पनं सायंप्रातर्मध्यन्दिनानां सवनत्वकल्पनं ब्रह्ममहिमप्राप्तिफलम् । अत्र फलस्याश्रवणात् पूर्वप्रस्तुतफलं ब्रह्मविद्याङ्गम् । छा-

---

१. तै. नारायणं. ५२-अनु॥—२. तै. नारायणं ५१-अनु ॥—३. पूर्वमीमांसा न्यायः॥

न्दोग्ये चाशिशिषादीनां दीक्षात्वकल्पनं त्रेधा विभक्तपुरुषायुषस्य च सवनत्रयकल्पनम्; १"शतं जीवति" इति च फलम् ॥ २४ ॥

इति वेदान्तसारे पुरुषविद्याधिकरणम् ॥ ९ ॥

---

वेदान्तदीपे—पुरुषविद्यायामपि चेतरेषामनाम्नानात्॥ तैत्तिरीयके पुरुषविद्याऽऽम्नाता २"तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानश्श्रद्धा पत्नी शरीरम्" इत्यादिका। छान्दोग्येऽपि ३"पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि" इत्यादिका। किमत्र विद्याभेदः - उत नेति संशयः। पुरुषविद्येति संज्ञैक्यात्, तैत्तिरीयके फलसम्बन्धानाम्नानात्, छान्दोग्ये १"शतं जीवति" इत्यनेनैकफलत्वाच्च विद्यैक्यमिति पूर्वः पक्षः। राद्धान्तस्तु—पुरुषविद्येति संज्ञैक्येऽपि सवनत्रयकल्पनाप्रकारभेदाद्यजमानपत्न्यादिकल्पनाप्रकारभेदाच्च रूपभेदात्, तैत्तिरीयके—पूर्वानुवाकगतस्य २"ब्रह्मणो महिमानमाप्नोति" इति ब्रह्मविद्याफलस्यैव सन्निधानात् अफलस्यास्य तदङ्गतया तत्फलत्वात् फलभेदाच्च विद्याभेदः। सूत्रार्थस्तु—पुरुषविद्यायामपि उभयत्र रूपभेदाद्विद्याभेदः, कुतः? इतरेषामनाम्नानात् - इतरशाखोदितानां तदितरशाखायामनाम्नानात्; छान्दोग्ये—तैत्तिरीयकाम्नातानां यजमानपत्न्यादीनां सवनानां चानाम्नानात्, तैत्तिरीयके च च्छान्दोग्याम्नातानां यज्ञावयवानामनाम्नानादित्यर्थः। तैत्तिरीयके हि २"आत्मा यजमानश्श्रद्धा पत्नी" इति यजमानादिकल्पनम्, २"यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानि"इतिच सवनत्रयकल्पनम्,छान्दोग्ये चाशिशिषादीनां दीक्षात्वादिकल्पनम्, पुरुषायुषंत्रेधा विभज्य सवनत्रयकल्पनं चेति यज्ञावयवकल्पनप्रकारभेदाद्रूपभेदः स्पष्टः। फलमपि तथैवेति इतरेषामिति फलस्यापि ग्रहणम् ॥ २४ ॥

इति वेदान्तदीपे पुरुषविद्याधिकरणम् ॥ ९ ॥

---

(श्रीशारीरकमीमांसाभाष्ये वेधाद्यधिकरणम् ॥ १० ॥)

---

## वेधाद्यर्थभेदात्। ३। ३। २५॥

आथर्वणिका उपनिषदारम्भे ४"शुक्रं प्रविध्य हृदयं प्रविध्य"इत्या

---

१. छा. ३-१६-७ ॥—२. तै. नारा. ५२-अनु ॥—३. छा. ३-१६-१ ॥—४॥

लौकिकस्य कर्मणः कर्तुर्देहाद्व्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात्तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते। अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः ॥ २ ॥

कानि पुनस्तानि लिङ्गानि ; यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते। तत्राह—

## आचारदर्शनात् । ३ । ४ । ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते—अश्वपतिः केकयः किल आत्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह—[१]"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इति। तथा जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते [२]"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" [३]"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति। अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥ ३ ॥

लिङ्गमिदम् ; प्रासिरुच्यतामित्यत्राह—

## तच्छ्रुतेः । ३ । ४ । ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह—[४]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति। नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या; यतः प्रकरणाच्छ्रुतिर्बलीयसी; [४]"यदेव विद्यया करोति" इति विद्यामात्रविषया हीयं श्रुतिः ॥ ४ ॥

## समन्वारम्भणात् । ३ । ४ । ५ ॥

[५]"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोस्साहित्यं च

---

१. छा. ५-११-५ ॥—२. गी. ३-२० ॥—३. वि. ६-६-१२ ॥—४. छा. १-१-१० ॥—५. बृ. ६-४-२ ॥

दृश्यते। साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥

## तद्वतो विधानात्। ३। ४। ६॥

विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमित्यवगम्यते—[१]"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादौ। [१]"वेदमधीत्य" इत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत एव विदधाति। अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम्। अतो ब्रह्मविद्यापि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ॥ ६ ॥

## नियमात्। ३। ४। ७॥

इतश्च न विद्यातः पुरुषार्थः। [२]"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात्कर्मण एव फलमित्यवगम्यते। विद्या तु कर्माङ्गमिति ॥ ७ ॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्। ३। ४। ८॥

तुशब्दात्पक्षो व्यावृत्तः; विद्यात एव पुरुषार्थः; कुतः? अधिकोपदेशात्—कर्मसु कर्तुर्जीवाद्धेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातः [३]फलमित्येवमेव मतम्। लिङ्गानि तिष्ठन्तु; वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोऽधिकस्यैव। कथम्? तद्दर्शनात्—प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य

१. छा. ८-१५-१ ॥—२. ईशावास्य-२ ॥—३. पुरुषार्थ इत्ये. पा ॥

निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्[1] "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" [2] "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [3] "यस्सर्वज्ञस्सर्ववित्' [4] "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [5] "स एको ब्रह्मण आनन्दः" [6] "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" [7] "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" [8] "स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः" [9] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः)" [10] "भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" इत्यादिषु । तस्माद्वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पस्याविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्रतत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते—

## तुल्यं तु दर्शनम् । ३ । ४ । ९ ॥

यदुक्तं—ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गम्—इति ; तत्र विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम्, ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः, अननुष्ठानस्यापि दर्शनात् । दृश्यते हि ब्रह्मविदां कर्म-

---

१.छा. ८-१-५॥—२. छा. ६-२-३॥—३. मु. १-१-९ ॥—४. श्वे. ६-८ ॥—५. तै. आन. ८-४ ॥—६. तै. आन. ४-१ ॥—७. बृ. ६-४-२२ ॥ —८. श्वे. ६-९ ॥ —९.बृ.५ ८-९॥—*कुण्डलितो वाक्यशेषः केषुचित्कोशेषु न दृश्यते ॥—१०.तै.आ.८-१॥

त्यागः १"ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ। अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम्। कथमिदमुपपद्यते—ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च ? फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात्तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते। वक्ष्यतिच२"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"इति। फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात्तस्याननुष्ठानदर्शनमुपपन्नतरम्। विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते॥ ९॥

यदुक्तं-श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यते इति; तत्राह—

## असार्वत्रिकी ।३।४।१०॥

न सर्वविद्याविषयेयं श्रुतिः; अपितूद्गीथविद्याविषयैव ३ "यदेव विद्यया करोति" इति यच्छब्दस्यानिर्धारितविशेषस्य ४"उद्गीथमुपासीत" इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। नहि यत्करोति, तद्विद्ययेति सम्बध्यते; यदेव विद्यया करोति, तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते॥ १०॥

यच्चेदमुक्तं ५"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोस्साहित्यदर्शनाद्विद्या कर्माङ्गम्—इति; तत्राह—

## विभागश्शतवत् ।३।४।११॥

५"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोभिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः। शतवत्—यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतम्, रत्नार्थं शतमिति विभागः प्रतीयते; तथेहापि॥

## अध्ययनमात्रवतः ।३।४।१२॥

१॥—२. शारी. ३-४-२६॥—३. छा. १-१-१०॥—४. छा. १-१-१॥—
५. बृ. ६-४-२॥

यदुक्तं विद्यावतः कर्मविधानाद्विद्या कर्माङ्गम्–इति; नैतद्युक्तम्, [१]"वेदमधीत्य" इत्यध्ययनमात्रवतो विधानात् । नचाध्ययनविधिरेवार्थबोधे प्रवर्तयति, आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते ; ततः कर्मार्थी कर्मज्ञाने प्रवर्तते, मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गम् । यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्तयति ; तथापि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः । यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात्फलसाधनभूतं कर्मानुष्ठानमर्थान्तरम् ; तथाऽर्थज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसम्बन्धगन्धो विद्यते ॥ १२ ॥

## नाविशेषात् । ३ । ४ । १३ ॥

यच्चोक्तं [२]"कुर्वन्नेवेह कर्माणि" इत्यात्मविदं ज्ञानाद्व्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति ; तन्नोपपद्यते ; अविशेषात्-नह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः । [३]"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य [२]"कुर्वन्नेवेह कर्माणि" इत्यस्य वाक्यस्यार्थमाह—

## स्तुतयेऽनुमतिर्वा । ३ । ४ । १४ ॥

वाशब्दोऽवधारणार्थः ; [२]"ईशावास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात्स-

---

१. छा. ८-१५-१ ॥—२. ईशावास्य. २ ॥—३. गी. ३-२० ॥

वेदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति। वाक्यशेषश्चैवमेव दर्शयति—[1]"एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति। अतो न कर्माङ्गं विद्या ॥ १४ ॥

## कामकारेण चैके । ३ । ४ । १५ ॥

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते [2]"किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोकः" इति। विदुषो विरक्तस्य कामकारेण गार्हस्थ्यकर्मत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति। यज्ञादिकर्माङ्गत्वेहि विद्यायाः विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति। अतो न विद्या कर्माङ्गम् ॥ १५ ॥

## उपमर्दं च । ३ । ४ । १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं च प्रतिवेदान्तमधीयते। [3]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"इत्यादिकम्। तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि । ३ । ४ । १७ ॥

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम्। ननूर्ध्वरेतस आश्रमा न सन्त्येव [4]"यावज्जीवमग्निहोत्रं जुहोति" इत्यादिनाऽग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः; श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात्। अत आह—शब्दे हि—इति। वैदिक एव हि शब्दे ते दृश्यन्ते[5]"त्रयो धर्मस्कन्धाः" [6]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [2]"एतमेव प्रव्राजिनो लोकमिच्छन्तः

---

१. ईशा. १-२ ॥—२. बृ. ६-४-२२ ॥—३. मु. २-२-८॥—४. आपस्तम्बश्रौत. ३-१४-८ ॥ बह्वृच इति शाबरः ॥—५. छा. २-२३-१॥—६. छा.५-१०-१ ॥

प्रव्रजन्ति" इत्यादौ। यावज्जीवश्रुतिस्त्वविरक्तविषया॥ १७॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि।३।४।१८॥

यदिदं [1]"त्रयो धर्मस्कन्धाः" इत्यादौ वैदिके शब्दे ऊर्ध्वरेतस आश्रमा दृश्यन्ते; अतस्ते सन्त्येवेति; नैतदुपपद्यते; यतः [1]"त्रयो धर्मस्कन्धाः"इत्यादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते—अनुवादमात्रमित्यर्थः। कुत एतत्? अचोदनात्—अविधानादित्यर्थः। न ह्यत्र विधिशब्दः श्रूयते; [1]"त्रयो धर्मस्कन्धाः" इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते, [1]"ब्रह्मसंस्थोऽमृतत्वमेति" इत्युपसंहारात्। अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम्। [2]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च देवयानविधिपरत्वात्तत्रापि नाश्रमान्तरविधिसम्भवः। अपि चापवदति हि श्रुतिराश्रमान्तरं [3]"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका। अत उर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते॥ १८॥

## अनुष्ठेयं बादरायणस्साम्यश्रुतेः।३।४।१९॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते। कुतः? साम्यश्रुतेः-उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते। [1]"त्रयो धर्मस्कन्धाः" इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया सङ्कीर्तनं गृहस्थाश्रमस्येतरेषां च समानम्; अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव संभवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्; तदितरेषामपि समानमन्यत्राभिनिवेशात्। नच गार्हस्थ्यधर्म एव [1]"यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्यम्" इति सर्वैश्शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति युक्तम्, [1]"त्रयो धर्मस्कन्धाः" इति त्रित्वेन संगृह्य [1]"प्रथमो...द्वितीयः....तृतीयः" इति विभागवचनानुपपत्तेः। अतः

---

१. छा. २-२३-१॥—२. छा. ५-१०-१॥—३. यजु. १-कां. ५-प्र. २-अनु॥

[१]"यज्ञोऽध्ययनं दानम्" इति गृहस्थाश्रम उच्यते। अध्ययनशब्दो वेदाभ्यासपरः। तपश्शब्देन वैखानसपारिव्राज्ययोर्ग्रहणम्, उभयोः तपःप्रधानत्वात्। तपश्शब्दो हि कायक्लेशे रूढः; स च द्वयोरपि समानः।ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते। [१]"ब्रह्मसंस्थोऽमृतत्वमेति" इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः, सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात्। ब्रह्मणि संस्था—संस्थितिः ब्रह्मसंस्थत्वम्; तच्च सर्वेषां सम्भवत्येव। ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः; तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाग्भवति। तदेतद्विस्पष्टमुक्तं भगवता पराशरेण [२]"प्राजापत्यं ब्राह्मणानाम्" इत्यारभ्य [३]"ब्राह्मं संन्यासिनां स्मृतम्" इत्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय [४]"एकान्तिनस्सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः" इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता।अतो गृहस्थाश्रमतुल्याः ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। [५]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इतिच अरण्ये इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद्देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां, नानुवाद इत्युपपादयितुमाह—

## विधिर्वा धारणवत् ।३।४।२०॥

वाशब्दोऽवधारणार्थः। विधिरेवायमाश्रमाणाम्; धारणवत्—यथा दिष्टाग्निहोत्रे [६]"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्रानुवादसरूपादपि वाक्यादुपरि धारणस्याप्राप्तत्वाद्विधिराश्रीयते; तदुक्तं शेषलक्षणे [७]"विधिस्तु धारणेऽपूर्वत्वात्" इति; तथाऽत्राप्यप्राप्त-

१. छा. २-२३-१ ॥—२. वि-पु. १-६-३४ ॥—३. वि-पु. १-६-३७ ॥—४. वि-पु. १-६-३९ ॥—५. छा. ५-१०-१ ॥—६ ॥—७. पू. मी. ३-४-१५ ॥

त्वाद्विधिरेवाश्रयणीयः। १"ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जाबालानामाश्रमविधिमसन्तामिव कृत्वैतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम्। एवमाश्रमान्तरविधानादृणश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्चाविरक्तविषया एवेति वेदितव्याः। अन्याश्च ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः। अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥ २० ॥

इति श्रीशारीरकमीमांसाभाष्ये पुरुषार्थाधिकरणम् ॥ १ ॥

---

वेदान्तसारे—पुरुषार्थोऽतश्शब्दादिति बादरायणः॥ विद्यातः पुरुषार्थः इति भगवान् बादरायणो मेने; २"ब्रह्मविदाप्नोति परम्" २"यो वेद... सोऽश्नुते सर्वान् कामान् सह" इत्यादिशब्दात् ॥ १ ॥

शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः॥ ३"तत्त्वमसि" इत्यादिसामानाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वावगमात् तद्वेदनस्य तत्संस्कारतया कर्मशेषत्वात् द्रव्यादिष्विव फलश्रुतिरर्थवादः ॥ २ ॥

आचारदर्शनात् ॥ ४"यक्ष्यमाणो ह वै भगवन्तोऽहम्" इत्यादौ ब्रह्मविदः कर्मप्रधानाचारदर्शनात् विद्या कर्माङ्गम् ॥ ३ ॥

तच्छ्रुतेः ॥ ५"यदेव विद्यया करोति" इति श्रुत्यैव विद्यायाः कर्मसु विनियोगात्। यत्करोति, तद्विद्यया इति हि श्रुतिः। यद्विद्यया साधनभूतया कर्म करोति, तत्कर्म वीर्यवत्तरमिति वा ॥ ४ ॥

समन्वारम्भणात् ॥ ६"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यदर्शनाच्च विद्या कर्माङ्गम् ॥ ५ ॥

तद्वतो विधानात् ॥ ७"आचार्यकुलाद्वेदमधीत्य...अभिसमावृत्य कुटुम्बे" इत्यादौ अर्थज्ञानपर्यन्ताध्ययनवतः कर्मविधानाच्च। अध्ययनं ह्यर्थज्ञानपर्यन्तम् ॥ ६ ॥

---

१ जाबालोप. ४. ख॥—२. तै. आन. १-अनु ॥—३. छा. ६-८-७॥—४. छा. ५-११-५॥—५. छा. १-१-१० ॥—६. बृ. ६-४-२ ॥—७. छा. ८-१५-१ ॥

नियमात् ॥ १"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदो जीवस्य कर्मसु विनियोगाच्च ॥ ७ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ न विद्या कर्माङ्गम्; अपितु विद्यातः पुरुषार्थ इत्येवमेव भगवतो बादरायणस्य मतम्, कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्यैव वेद्यतयोपदेशात्। तत्कथम् ?२"बहु स्यां प्रजायेयेति" ३"स कारणं करणाधिपाधिपः" इत्यादिवाक्येषु वेद्यस्याधिकत्वदर्शनात् ॥८ ॥

तुल्यं तु दर्शनम् ॥ विद्यायाः प्राधान्येऽपि तुल्यमाचारदर्शनम्; ४"ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे" इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते। अनुष्ठानन्तु फलाभिसन्धिरहितस्य विद्याङ्गत्वेन; त्यागस्तु फलाभिसन्धियुक्तस्येति न विरोधः ॥ ९ ॥

असार्वत्रिकी ॥ ५"यदेव विद्यया करोति" इति न सार्वत्रिकी विद्योच्यते ५"यदेव विद्यया" इति प्रसिद्धवन्निर्देशात्; प्रसिद्धिश्चोद्गीथविद्यायाः, ५"यदेव विद्यया करोति...तदेव वीर्यवत्तरं भवति" इति प्रकृतोद्गीथविद्यायुक्तस्य कर्मणो हि वीर्यवत्तरत्वसाधनभावो विधीयते ॥ १० ॥

विभागश्शतवत् ॥६"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोर्भिन्नफलत्वेन स्वस्मै फलायान्वेतीति विभागः; यथा क्षेत्ररत्नविक्रयिणे शतद्वयमन्वेतीत्यत्र क्षेत्रार्थं शतम्, रत्नार्थं शतमिति ॥ ११ ॥

अध्ययनमात्रवतः॥ ७"वेदमधीत्य" इत्यध्ययनमात्रवतः कर्मविधानात् न विद्या कर्माङ्गम्; अध्ययनविधिर्हि अक्षरराशिग्रहणमात्रे पर्यवस्यतीत्युक्तम्, अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता "विद्यात्" "उपासीत" इति विहिता विद्या प्रत्ययावृत्तिरूपा ॥ १२ ॥

नाविशेषात् ॥ १"कुर्वन्नेवेह कर्माणि" इत्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोग इति विशेषहेत्वभावात्, १"ईशावास्यमिदं सर्वम्" इति प्रकरणाच्च विद्याङ्गभूतमेवच तत्कर्मेति ज्ञायते, अतो न विद्या कर्माङ्गम् ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ विद्यास्तुतये कर्मानुमतिर्वा । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि तैर्न लिप्यते इति हि विद्या स्तुता स्यात् । १"न कर्म लिप्यते नरे" इति च वाक्यशेषः ॥ १४ ॥

---

१. ईशावास्य. २ ॥—२. छा. ६-२-३ ॥—३. श्वे. ६-९॥—४. ॥—५. छा. १-१-१० ॥—६. बृ. ६-४-२ ॥—७. छा. ८-१५-१ ॥

**कामकारेण चैके ॥** १"किं प्रजया करिष्यामः"इत्यादिना कामकारेण गार्हस्थ्यत्यागमधीयत एके; अतश्च विद्यैव प्रधानभूता ॥ १५ ॥

**उपमर्दं च ॥** विद्यया सर्वकर्मोपमर्दश्चाधीयते २"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिना ॥ १६ ॥

**ऊर्ध्वरेतस्सु च शब्दे हि ॥** ऊर्ध्वरेतस्स्वाश्रमेषु विद्यादर्शनात् तेषु चाग्निहोत्राद्यभावान्न विद्या कर्माङ्गम् । ते चाश्रमास्सन्त्येव ; ३"त्रयो धर्मस्कन्धाः" इति वैदिके शब्दे हि दृश्यते ॥ १७ ॥

**परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥** ३"त्रयो धर्मस्कन्धाः" इत्यत्र चोदनाभावादुपासनस्तुत्यर्थमनुवादमेव जैमिनिर्मेने । ४"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यपवदति चाश्रमान्तरम् ॥ १८ ॥

**अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥** गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयमिति बादरायणमतम् , ३"त्रयो धर्मस्कन्धाः" इति सर्वाश्रमसाम्यश्रुतेः॥

**विधिर्वा धारणवत् ॥** ५"उपरि हि देवेभ्यो धारयति" इत्यप्राप्तत्वेन यथा विधिः ; तद्वत् ॥ २० ॥

इति वेदान्तसारे पुरुषार्थाधिकरणम् ॥ १ ॥

---

**वेदान्तदीपे—पुरुषार्थोऽतश्शब्दादिति बादरायणः॥** किं विद्यातः पुरुषार्थः, उत कर्मण इति संशयः । कर्मण इति पूर्वः पक्षः, कर्माङ्गत्वाद्विद्यायाः । कर्मसु कर्तृभूतप्रत्यगात्मनो याथात्म्यप्रतिपादनपराणि वेदान्तवाक्यानि। विद्यायाः कर्माङ्गत्वं च ६"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति श्रुत्यैवावगम्यते । नच प्रकृतोद्गीथोपासनविषयत्वमस्य वक्तुं शक्यते, ६"यदेव विद्यया करोति" इति श्रुत्यैव सर्वकर्मसु विद्याया विनियुक्तत्वात् । श्रुतिश्च प्रकरणाद्बलीयसी। विद्यायाः कर्माङ्गत्वं कथमित्यपेक्षायां ७"तत्त्वमसि"८"अयमात्मा ब्रह्म" इति सामानाधिकरण्येन कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धानद्वारेण विद्यायाः कर्माङ्गत्वमित्यवगम्यते । अतः कर्तृसंस्काररूपत्वाद्ब्रह्मविद्यायाः कर्मण एव पुरुषार्थः । तत्रतत्र फलश्रुतिरर्थवादस्स्यात् । विद्यायाः कर्माङ्गत्वे

---

१. बृ. ६-४-२२ ॥—२. मु. २-२-८ ॥—३. छा. २-२३-१ ॥—४. यजु. १-का. ५-प्र. २-अनु॥—५॥—६. छा. १-१-१०॥—७. छा. ६-८-७॥—८. बृ. ६-४-५॥

भूयांसि लिङ्गानि च दृश्यन्ते सर्ववेदान्तेषु । राद्धान्तस्तु—कर्मसु कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दैकस्वरूपस्य सर्वेश्वरस्य सत्यसङ्कल्पस्य करणाधिपरूपप्रत्यगात्माधिपस्य वेद्यस्य वेदनरूपाया विद्यायाः १"ब्रह्मविदाप्नोति परम्" इत्यादिषु ब्रह्मप्राप्तिरूपफलोपदेशात् विद्यात एव फलम् । २"यदेव विद्यया करोति" इति श्रुतिः प्रसिद्धवन्निर्देशात्, प्रसिद्धिश्च प्रकृतोद्गीथोपासनस्यैवेति, प्रस्तुतोद्गीथोपासनविशेषनिष्ठा । ३"तत्त्वमसि" इति सामानाधिकरण्यं च तच्छब्दनिर्दिष्टस्य स्वसङ्कल्पकृतजगज्जन्मस्थितिध्वंसादिकस्य परस्य ब्रह्मणो न जीवस्वरूपत्वपरम्; अपितु जगत्कारणस्य ब्रह्मणो जीवशरीरकतया जीवस्यात्मत्वपरमिति ४"अधिकं तु भेदनिर्देशात्" इत्यादिषूक्तम्। ५"य आत्मनि तिष्ठन् ...यस्यात्मा शरीरम्" इति च प्रत्यगात्मन आत्मत्वं परस्य ब्रह्मणः श्रुत्यन्तरे व्यक्तम् । सूत्रार्थस्तु—पुरुषार्थोऽतः—विद्यातः; कुतः? १"ब्रह्मविदाप्नोति परम्" इत्यादिशब्दात् ॥ १ ॥

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥** ३"तत्त्वमसि"इत्यादिसामानाधिकरण्येन ब्रह्मणः कर्मसु कर्तृस्वरूपत्वावगमाद्विद्यायाः कर्तृसंस्कारद्वारेण कर्मशेषत्वात्तत्र पुरुषार्थवादोऽर्थवादमात्रम् ; यथा अन्येषु द्रव्यसंस्कारादिष्विति जैमिनिराचार्यो मन्यते ॥ २ ॥

**आचारदर्शनात् ॥** इतश्च विद्या कर्माङ्गम्; ब्रह्मविदामाचारो हि कर्मप्रधानो दृश्यते । यथाऽश्वपतिः कैकयो ब्रह्मविदग्रेसरः ६"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्याह । ७"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च स्मर्यते ॥ ३ ॥

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

**तच्छ्रुतेः ॥** २"यदेव विद्यया करोति"इत्यादिकायाश्श्रुतेर्विद्यायाः कर्माङ्गत्वमवगम्यते । नच दुर्बलेन प्रकरणेन श्रुतिर्विद्याविशेषोद्गीथविषयोपासने व्यवस्थाप्यते ॥ ४ ॥

**समन्वारम्भणात् ॥** ८"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यं च विद्यायाः कर्माङ्गत्वे हि भवति ॥ ५ ॥

---

१. तै. आन. १-अनु१ ॥—२ छा. १-१-१० ॥— ३. छा.६-८-७॥—४.शारी. २-१-२२ ॥—५. बृ. ५-७-२२॥ मा-पा ॥—६.छा.५-११-५ ॥—७ गी. ३-२०॥

तद्वतो विधानात्॥ विद्यावतः कर्मविधानाच्च विद्या कर्माङ्गम्। १"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे" इत्यादिनाऽध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्तत्वादध्ययनस्य विद्यावत एव कर्माणि विदधातीत्यवगम्यते ॥ ६ ॥

नियमात् ॥ २"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदामायुषः कर्मसु नियमदर्शनाच्च कर्मण एव पुरुषार्थः; न विद्यात इत्यवगम्यते । अतश्च विद्या कर्माङ्गम् ॥ ७ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ तुशब्दात्पक्षो व्यावृत्तः । बादरायणस्यैवं—विद्यातः फलमिति मतम्; कुतः? अधिकोपदेशात्—कर्मसु कर्तुः प्रत्यगात्मनोऽधिकस्य - अर्थान्तरभूतस्य वेद्यस्य वेदनभूतविद्यायाः फलसाधनत्वोपदेशात् । तद्दर्शनात्—दृश्यते हि वेदान्तवाक्येऽधिकविषयत्वं विद्यायाः। एवमेव हि ३"तदैक्षत बहु स्यां प्रजायेयेति" ४"सोऽकामयत बहु स्यां प्रजायेय" इत्यादिषु बहुभवनसङ्कल्पपूर्वकसृष्ट्यादेः कर्तुस्सर्वेश्वरस्य करणाधिपाधिपस्यानवधिकातिशयज्ञानानन्दैकस्वरूपस्य निखिलहेयप्रत्यनीकस्य वेद्यस्य विद्या ब्रह्मप्राप्तिफलाय विधीयते ॥ ८ ॥

तुल्यं तु दर्शनम् ॥ विद्यायाः प्रधानत्वेऽपि ब्रह्मविदामाचारदर्शनं तुल्यं—कर्मणामनाचारदर्शनमप्यस्तीत्यर्थः, ५"ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ । कर्मानुष्ठानदर्शनं तु फलाभिसन्धिरहितस्य कर्मणो विद्याङ्गत्वात्; त्यागस्तु फलाभिसन्धियुक्तस्य विद्याविरोधित्वादित्यभिप्रायः ॥ ९ ॥

असार्वत्रिकी ॥ ६"यदेव विद्यया करोति" इति श्रुतिः सर्वविद्यायाः कर्माङ्गत्वं विदधातीत्येतदसङ्गतम्; अत्र विद्याशब्दाभिहिता तु न सार्वत्रिकी, अपितूद्गीथविद्या । यत्करोति, तद्विद्ययेति नैवं पदान्वयः; अपितु यदेव विद्यया करोति, तदेव वीर्यवत्तरमिति । विद्यया क्रियमाणस्यान्यतोऽवगतस्य वीर्यवत्तरत्वं प्रति साधनभावोऽवगम्यते, यदेवेति प्रसिद्धवन्निर्देशात् । अन्यतोऽवगतिर्हि ७"उद्गीथमुपासीत" इति सन्निहितोद्गीथविद्यायाः ॥ १० ॥

१. छा. ८-१५-१ ॥—२. ईशावास्य. २॥—३. छा. ६-२-३ ॥—४. तै. आन. ६-अनु २॥—५ ॥—६. छा. १-१-१० ॥—७. छा. १-१-१ ॥—

विभागश्शतवत् ॥ १"तं विद्याकर्मणी समन्वारभेते" इत्यत्र विद्या च स्वस्मै फलाय कर्मच स्वस्मै फलायान्वारभत इति विभागो द्रष्टव्यः,यतो विद्याकर्मणोर्भिन्नफलत्वं कम् ;शतवत्-यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते, क्षेत्रार्थं शतम्, रत्नार्थं शतमिति विभागोऽवगम्यते ; तद्वत् ॥ ११ ॥

अध्ययनमात्रवतः ॥ २"वेदमधीत्य"इत्यध्ययनमात्रवत एव कर्मविधानात् अनेन विद्याया न कर्माङ्गत्वमवगतम्; अध्ययनविधिर्ह्याधानवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ; गृहीतस्य स्वाध्यायस्य फलवदर्थावबोधित्वदर्शनात्तन्निर्णयफलमीमांसाश्रवणे अधीतवेदः पुरुषस्स्वयमेव प्रवर्तते । अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता स्मृतिप्रत्ययावृत्तिरूपा "विद्यात्" "उपासीत" इति शास्त्रविहिता विद्या न कर्माङ्गम् ॥ १२ ॥

नाविशेषात् ॥ ३"कुर्वन्नेवेह कर्माणि" इति ब्रह्मविदामायुषः कर्मणि नियमो दृश्यत इत्येतन्न संभवति, अविशेषात्-विदुष एवेति विशेषाभावात्किमित्यविदुषो न स्यात्, विदुषस्त्वाप्रयाणादुपासनानुवृत्तिदर्शनादर्थस्वभावाद्विदुष एवेत्यभिप्रायः ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ वाशब्दोऽवधारणे । ३"ईशा वास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये कर्मानुमतिरेव । विद्यामाहात्म्यात्सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यत इति हि स्तुता भवति विद्या । वाक्यशेषे च ३"न कर्म लिप्यते नरे" इति श्रूयते ॥ १४ ॥

कामकारेण चैके ॥ एके शाखिनः कामकारेण च विद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते । ४"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति गार्हस्थ्यकर्मत्यागं ब्रुवद्वाक्यं विद्या प्रधानमिति दर्शयति ॥ १५ ॥

उपमर्दं च ॥ विद्यया सर्वकर्मोपमर्दं चाधीयते ५"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति ; तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात् तेषु चाग्निहोत्रादिकर्माभावान्न विद्या कर्माङ्गम् । ते चात्राश्रमास्सन्त्येव ; यतो वैदिके शब्दे तेऽपि दृश्यन्ते ६"त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानम्" इति

१. बृ. ६-४-२ ॥—२. छा. ८-१५-१ ॥—३. ईशावास्य. २, १ ॥—४. बृ. ६-४-२२ ॥—५. मु. २-२-८ ॥—६. छा. २-२३-१ ॥

१"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" २"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादौ। ३"यावज्जीवमग्निहोत्रम्" इत्यादिका तु श्रुतिरविरक्तविषया॥ १७॥

**परामर्शं जैमिनिरचोदनाच्चापवदति हि॥** ४"त्रयो धर्मस्कन्धाः" इत्यादिषु तेषामाश्रमाणामचोदनात्-अविधानात् उपासनास्तुत्यर्थं परामर्शम्-अनुवादं जैमिनिराचार्यो मन्यते। अपि च अपवदति हि श्रुतिराश्रमान्तरं ५"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका। अतस्ते न सन्त्येव॥

**अनुष्ठेयं बादरायणस्साम्यश्रुतेः॥** गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते; कुतः? तस्यापि तत्साम्यश्रुतेः—४"त्रयो धर्मस्कन्धाः" इत्येवमादौ हि सर्वेषामाश्रमाणामेकरूपं सङ्कीर्तनम्॥ १९॥

**विधिर्वा धारणवत्॥** वाशब्दोऽवधारणे; सर्वेषामाश्रमाणां विधिरेवायम्। धारणवत्—यथा ६"अधस्तात्समिधं धारयन्ननुद्रवेत्" ६"उपरि हि देवेभ्यो धारयति" इत्यनुवादसरूपेऽप्युपरिधारणस्याप्राप्तत्वेन विधिराश्रीयते; एवमिहाश्रमाणामपि। अतः ऊर्ध्वरेतस्स्वपि विद्यादर्शनाद्विद्यातः पुरुषार्थ इति॥

इति वेदान्तदीपे पुरुषार्थाधिकरणम्॥ १॥

---

(श्रीशारीरकमीमांसाभाष्ये स्तुतिमात्राधिकरणम्॥ २॥)

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्।३।४।२१

इदमिदानीं चिन्त्यते ७"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" इति एवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि, आहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानीति। अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः। किं युक्तम्? स्तुतिमात्रपराणीति। कुतः? उद्गीथाद्युपादानात्। क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां र-

---

१. छा. ५-१०-१॥—२. बृ. ६-४-२२॥—३॥—४. छा. २-२३-१॥—
५. यजु. १-कां. ५-प्र. २-अनु॥—६॥—७. छा. १-१-३॥

सतमादित्वं प्रतिपादितम्; यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य [1]"इयमेव जुहूः स्वर्गो लोक आहवनीयः"इत्यादिकस्य तत्स्तुतिमात्रपरत्वम्, तथेहापि। तदिदमाशङ्कते—स्तुतिमात्रमुपादानादितिचेत्—इति। उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्—

( सिद्धान्तः )

अत्रोत्तरं—नापूर्वत्वात्—इति। न स्तुतिमात्रत्वमुपपद्यते; कुतः? अपूर्वत्वात्—अप्राप्तत्वात्। न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः; येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन्। नचोद्गीथादिविधिरत्र सन्निहितः; येन [1]"इयमेव जुहूस्स्वर्गो लोक आहवनीयः" इत्यादिवत्तदेकवाक्यत्वेन यथाकथाचन विधया तत्स्तुतिपरत्वमाश्रीयेत। अतः क्रतुवीर्यवत्तरत्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम्॥ २१॥

## भावशब्दाच्च। ३। ४। २२॥

[2]"उपासीत" इत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम्। विधिप्रत्यययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति। तस्मादुपासनविधानार्था एताश्श्रुतयः॥ २२॥

इति श्रीशारीरकमीमांसाभाष्ये स्तुतिमात्राधिकरणम्॥ २॥

---

वेदान्तसारे—स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्॥ उद्गीथादिषु रसतमत्वादिदृष्टिविधिर्न सम्भवति; [1]"इयमेव जुहूस्स्वर्गो लोक आहवनीयः" इतिवत्, कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्ववचनं तत्स्तुतिमात्रमिति चेत्—नैतत्, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्। रसतमत्वादेश्चाप्राप्तत्वाद्रसतमत्वादिदृष्टिविधिरेव॥ २१॥

भावशब्दाच्च॥ [2]"उद्गीथमुपासीत" इति विधिप्रत्ययाच्च॥ २२॥

इति वेदान्तसारे स्तुतिमात्राधिकरणम्॥ २॥

---

१॥—२. छा. १-१-१॥

वेदान्तदीपे—स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ भावशब्दाच्च॥ १"ओमित्येतदक्षरमुद्गीथमुपासीत"१"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः"इत्येतज्जातीयके किं कर्माङ्गाश्रयाणां दृष्टिविशेषाणां विधिराश्रेयः,उतोद्गीथादिस्तुतिमात्रमिति संशयः।विधित्वे सिद्धे हि गोदोहनादिवद्भवति;विधित्वमेव नसम्भवतीति पूर्वः पक्षः।२"इयमेव जुहूस्स्वर्गो लोकआहवनीयः"इतिवत् कर्माङ्गभूतोद्गीथादिसम्बन्धितयोपादानाद्रसतमत्वादेः तत्स्तुतिमात्रत्वमेव; न रसतमत्वादिदृष्टिविधिः । राद्धान्तस्तु—जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्,रसतमत्वादेरप्राप्तत्वाच्च,१"उपासीत"इति विधिप्रयेन च, न स्तुतिमात्रम्, तद्दृष्टिविधिरेव । सूत्रद्वयमपि व्याख्यातम् ॥२१, २२॥

इति वेदान्तदीपे स्तुतिमात्राधिकरणम् ॥ २ ॥

(श्रीशारीरकमीमांसाभाष्ये पारिप्लवार्थाधिकरणम् ॥ ३ ॥)

## पारिप्लवार्था इति चेन्न विशेषितत्वात्।३।४।२३॥

३"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगम" ४"श्वेतकेतुर्हारुणेय आस" इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविशेषप्रतिपादनार्थानीति चिन्तायाम् ५"आख्यानानि शंसन्ति"इत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेत्—

(सिद्धान्तः)

न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोगमर्हन्ति; कुतः? विशेषितत्वाद्विनियोगस्य । ५"आख्यानानि शंसन्ति" इत्युक्त्वा तत्रैव ६"मनुर्वैवस्वतो राजा" इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते; अतस्तेषामेव तत्र विनियोग इति गम्यते । तस्मान्न सर्वा वेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः; अपि तु विद्याविध्यर्थाः ॥ २३ ॥

१. छा. १-१-१, ३ ॥ २ ॥—३ कौ. ३-१ ॥—४. छा. ६-१-१ ॥—५॥—६ ॥

# तथा चैकवाक्योपबन्धात् । ३ । ४ । २४॥

१"आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यतयोपबन्धाच्चाख्यानानां विद्याविध्यर्थान्येव तानीति गम्यते; यथा२"सोऽरोदीत्" इत्येवमादेः कर्मविध्यर्थत्वम्; न पारिप्लवार्थत्वम् ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये पारिप्लवार्थाधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ वेदान्तेषु तत्तद्विद्यारम्भेऽधीताः ३"प्रतर्दनो ह वै" इत्याद्याख्यायिकाः पारिप्लवार्थाः, ४"आख्यानानि शंसन्ति" इति तत्र विनियोगात्—इतिचेत्—न; तत्रैव ५"मनुर्वैवस्वतः" इत्याद्याख्यानानां विशेषितत्वात् तेषामेव तत्र विनियोगः ॥ २३ ॥

तथा चैकवाक्योपबन्धात् ॥ विद्याविधिनैकवाक्यत्वाच्च ६"सोऽरोदीत्" इत्यादिवत् विद्यास्तुत्यर्था एताः २४ ॥

इति वेदान्तसारे पारिप्लवार्थाधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—पारिप्लवार्था इति चेन्न विशेषितत्वात्॥ तथा चैकवाक्योपबन्धात् ॥ ३"प्रतर्दनो ह वै दैवोदासिः" इत्यादयो वेदान्तेष्वाख्यानविशेषाः किं पारिप्लवप्रयोगार्थाः, उत तत्रतत्र विद्याविशेषप्रतिपादनार्थाः इति संशयः। ४"आख्यानानि शंसन्ति" इति पारिप्लवे विनियोगात्तदर्था इति पूर्वः पक्षः । राद्धान्तस्तु—४"आख्यानानि शंसन्ति" इत्युक्त्वा ५"मनुर्वैवस्वतो राजा" इति मन्वाद्याख्याने विनियोगस्य विशेषितत्वात्, ३"तं मामायुरमृतमित्युपास्स्व" १"आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यत्वाच्च, २"सोऽरोदीत्"इत्यादिवद्विद्याविध्यर्था एव।सूत्रद्वयमपि व्याख्यातम्॥२३,२४॥

इति वेदान्तदीपे पारिप्लवार्थाधिकरणम् ॥ ३ ॥

---

१. बृ. ६-५-६ ॥—२. यजु. १-५-१॥—३. कौ. ३-१ ॥—४ ॥—५ ॥

# अत एव चाग्नीन्धनाद्यनपेक्षा । ३ । ४ । २५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम्। विद्यावन्त ऊर्ध्वरेतस आश्रमिणस्सन्तीत्युक्तम् [1]"ऊर्ध्वरेतस्सु च शब्दे हि" इत्यादिभिस्सूत्रैः। इदानीमूर्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह—अत एव चाग्नीन्धनाद्यनपेक्षा—इति। यत ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते[2]" ब्रह्मसंस्थोऽमृतत्वमेति" [3]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [4]"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [5]"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इत्यादिकया; अत एवोर्ध्वरेतस्सु विद्या अग्नीन्धनाद्यनपेक्षा—अग्नीन्धनम्—अग्न्याधानम्; आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या। केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

वेदान्तसारे—अत एव चाग्नीन्धनाद्यनपेक्षा॥ ऊर्ध्वरेतसाम् [4]"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादिश्रुतेरेव विद्यावत्त्वात् तेष्वाधानाद्यनपेक्षा विद्या ॥ २५ ॥

इति वेदान्तसारे अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

वेदान्तदीपे—अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्या सम्भवति, नेति संशयः। यज्ञाद्यभावात्तेषां तदङ्गिका विद्या न सम्भवतीति पूर्वः पक्षः। राद्धान्तस्तु—[5]"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" [4]"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादिश्रुतेः तेषां विद्यावत्त्वावग-

१ शारी. ३ ४-१७ ॥—२. छा.२-२३-१ ॥—३. छा.५-१०-१॥—४. बृ. ६-४-२२ ॥—५. कठ. १-२-१५ ॥

मात्तेष्वग्निहोत्राद्यनपेक्षा विद्येति निश्चीयते । सूत्रार्थस्तु—अतएव विद्यावत्त्व-श्रुतेरेव आधानाद्यनपेक्षा तेषु विद्या । अग्नीन्धनं हि—अग्न्याधानम्॥ २५॥

इति वेदान्तदीपे अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

( श्रीशारीरकमीमांसाभाष्ये सर्वापेक्षाधिकरणम् ॥ ५ ॥ )

# सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । ३ । ४ । २६ ॥

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति ; तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति, यज्ञादिश्रुतिरपि १"विविदिषन्ति" इति शब्दात्कर्मणो वेदनाङ्गतां न प्रतिपादयतीति–

( सिद्धान्तः )

अत आह—सर्वापेक्षा-इति। अग्निहोत्रादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु ; कुतः ? यज्ञादिश्रुतेः । १"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति, यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिः ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते ; यथा असेर्हननसाधनत्वे सति असिना जिघांसतीति व्यपदेशः। अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयमाप्रयाणदनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव ; वक्ष्यति च २"आवृत्तिरसकृदुपदेशात्" इत्यादिना । एवंरूपं च ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिककर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायत इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा

१. बृ. ६-४-२२ ॥ --२. शारी. ४-१-१॥—

विद्या। अश्ववत्—यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः;एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा। तदिदमाह स्वयमेव भगवान् [1]"यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" [2]"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति ॥ २६ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वापेक्षाधिकरणम् ॥ ५ ॥

वेदान्तसारे—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ कर्मवत्सु गृहस्थेष्वग्निहोत्रादिसर्वकर्मापेक्षा विद्या [3]"ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिश्रुतेः।यथाचाश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने। ऊर्ध्वरेतस्सु च स्वाश्रमकर्मापेक्षा ॥ २६ ॥

इति वेदान्तसारे सर्वापेक्षाधिकरणम् ॥ ५ ॥

वेदान्तदीपे—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ कर्मवत्सु गृहस्थेषु किं यज्ञादिकर्मापेक्षा विद्या, उत तत्रापि केवलैवेति संशयः। ऊर्ध्वरेतस्सु यज्ञाद्यनपेक्षैवामृतत्वं साधयति चेत्—कर्मनिरपेक्षाया विद्याया एव साधनत्वमभ्युपगमनीयम्। तथा सति गृहस्थेष्वपि तन्निरपेक्षैव साधयितुं समर्थेति पूर्वः पक्षः। नहि स्वर्गादिसाधनभूतमग्निहोत्रादिकर्म पुरुषभेदेन नानाविधाङ्गकं दृष्टम्। [3]"विविदिषन्ति" इति शब्दोऽपि वेदनेच्छायां कर्माणि विनियुङ्क्ते, न विद्यायाम्। राद्धान्तस्तु—कर्मवत्सु गृहस्थेषु यज्ञादिसर्वकर्मापेक्षा विद्या ; कुतः? यज्ञादिश्रुतेः-[3]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इतिहि यज्ञादयो विद्याङ्गत्वेन विनियुज्यन्ते। अतो गृहस्थेषु कर्मापेक्षा विद्या। इच्छाया इष्यमाणप्रधानत्वात्[3]"विविदिषन्ति" इतीष्यमाणं ज्ञानमेवेत्यवगम्यते। यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धरूपपरिकर्मापेक्षः; एवं मोक्षसाधनभूता विद्यापि नित्यनैमित्तिकपरिकर्मापेक्षा। ऊर्ध्वरेतस्सु च स्वाश्रमविहितं कर्मैव परिकर्म भवतीति तेष्वपि विद्यासम्बन्धश्शास्त्रादवगम्यते। शास्त्रैकसमधिगम्ये हि यथाशास्त्रमभ्युपगमनीयम्। सूत्रमपि व्याख्यातम् ॥ २६ ॥

इति वेदान्तदीपे सर्वापेक्षाधिकरणम् ॥ ५ ॥

१. गी. १८-५ ॥—२. गी. १८-४६ ॥—३. बृ. ६.४-२२ ॥

—••◆(श्रीशारीरकमीमांसाभाष्ये शमदमाद्यधिकरणम् ॥ ६ ॥)◆••—

## शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् । ३ । ४ २७ ॥

गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि, उत नेति चिन्तायाम्—आन्तरबाह्यकरणव्यापाररूपत्वात्कर्मानुष्ठानस्य, शमदमादीनां तद्विपरीतरूपत्वाच्चाननुष्ठेयानि—

—••◆( सिद्धान्तः )◆••—

इति प्राप्त उच्यते—यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः, तथाऽपि स विद्वान् शमदमाद्युपेतस्स्यात्; कुतः? तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः १"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्" इति । विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां, विद्यानिर्वृत्तये तेषां—शमादीनामवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि । नच करणव्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः, भिन्नविषयत्वात्—विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति । नच करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वासम्भवः, विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात् । अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ २७ ॥

इति श्रीशारीरकमीमांसाभाष्ये शमदमाद्यधिकरणम् ॥६ ॥

---

वेदान्तसारे—शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ गृहस्थो विहितकर्मव्यापृतोऽपि १"शान्तो दान्तः"

---

१. बृ. ६-४-२३ ॥

इत्यादिना शमदमादिविधेस्तद्युक्तस्स्यात्, विद्यानिष्पत्तये शमदमादीनामवश्यानुष्ठेयत्वात् । शान्त्युपरतिप्रभृतिभिर्विना विद्यानिष्पत्त्यनुपपत्तेः ॥ २७ ॥

इति वेदान्तसारे शमदमाद्यधिकरणम् ॥ ६ ॥

---

वेदान्तदीपे—शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ किं विद्यानिर्वृत्तये गृहस्थैश्शमदमादय उपादेयाः, उत नेति संशयः । गृहस्थानामान्तरबाह्यकरणव्यापाररूपकर्माङ्गकत्वाद्विद्यायाः, तद्विपरीतरूपशमदमाद्युपादानासामर्थ्यादूर्ध्वरेतस्सु कर्मरहितेषु शमादिविनियोगो भविष्यति, यथा यज्ञादिविनियोगः कर्मवत्सु गृहस्थेषु । तस्मादनुपादेयाश्शमादय इति पूर्वः पक्षः । राद्धान्तस्तु—१"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति सामान्येन विद्याङ्गतया विनियोगाद्गृहस्थैरप्युपादेयाः । न च कर्मवतां तेषां शमाद्युपादानासामर्थ्यम्, भिन्नविषयत्वाच्छमादेः । विहितेषु हि कर्मसु करणव्यापारः; अविहितेषु प्रयोजनशून्येषु च शमदमादयः । अतश्शमादिविनियोगो यज्ञादिविनियोगवन्न सङ्कोचमर्हति—इति । सूत्रार्थस्तु—यद्यपि गृहस्थो यज्ञादिकर्मसु विनियुक्तः, तथापितु शमदमाद्युपेतस्स्यात्; कुतः? १"शान्तो दान्तः" इत्यादिना तद्विधेः तदङ्गतया-विद्याङ्गतया विद्यानिष्पत्तये तेषामवश्यानुष्ठेयत्वाच्च । एकाग्रतानिष्पाद्यत्वाच्छमदमादिभिरेव विद्यानिष्पत्तिरित्यर्थः । यज्ञादिकर्माण्यपि पापनिबर्हणद्वारेणैकाग्रतामापादयन्तीत्यभिप्रायः ॥ २७ ॥

इति वेदान्तदीपे शमदमाद्यधिकरणम् ॥ ६ ॥

---

( श्रीशारीरकमीमांसाभाष्ये सर्वान्नानुमत्यधिकरणम् ॥ )

---

# सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३।४।२८ ॥

वाजिनां छन्दोगानां च प्राणविद्यायां २"न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति" ३"नह वा एवंविदि किञ्चनानन्नं भवति" इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते; किमियं प्राणविद्यानि-

---

१. बृ. ६-४-२३ ॥—२. बृ. ८-१-१४ ॥—३. छा. ५-२-१ ॥

ष्टस्य सर्वान्नानुमतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये, विशेषा-नुपादानात्सर्वदा—

—••◆( सिद्धान्तः )◆••—

इति प्राप्त उच्यते—प्राणात्यये—इति । चशब्दोऽवधारणे; प्राणात्ययापत्तावेवेत्यर्थः । कुतः? तद्दर्शनात्—दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा; किं पुनः प्राणविदः । उषस्तिः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेष्विभ्यग्रामे वसन्ननशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाण इभ्यं कुल्माषान् खादन्तं भिक्षमाणस्तेन च उच्छिष्टेभ्योऽन्ये न विद्यन्त इति प्रत्युक्तः पुनरपि [1]"एतेषां मे देहि" इत्युक्त्वा तेन-चेभ्येनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्यानुपानप्रतिग्रहमिभ्येनार्थितः [1]"उच्छिष्टं वै मे पीतं स्यात्" इति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा इति इभ्येन पर्यनुयुक्तः [1]"न वा अजीविष्यमिमानखादन्...कामो म उदपानम्"इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं जायायै दत्वा तया च रक्षितानपरेद्युर्याजनेनार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयमापन्नस्तानेवेभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद । अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदस्सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

## अबाधाच्च । ३ । ४ । २९ ॥

[2]"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्वि-

१. छा. १-१०-३, ४ ॥—२. छा. ७-२६-२ ॥

षयत्वात्प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥ २९ ॥

## अपि स्मर्यते ।३।४।३०॥

अपि च आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते —[1]"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ ३० ॥

## शब्दश्चातोऽकामकारे ।३।४।३१॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव ; अत एव सर्वेषामकामकारे शब्दः—कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः [2]"तस्माद्ब्राह्मणस्सुरां न पिबति पाप्मना [3]नोत्सृजा इति" इति । पाप्मना संस्पृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

वेदान्तसारे—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ प्राणविद्यानिष्ठस्य [4]"नह वा एवंविदि किञ्चनानन्नं भवति" इति सर्वान्नानुमतिर्न सर्वदा; अपितु प्राणात्ययापत्तावेव, अतिशयितशक्तेर्ब्रह्मविदोऽप्युच्छिष्टभक्षणादिः प्राणात्ययापत्तावेवेति दर्शनात् ॥ २८ ॥

अबाधाच्च ॥ [5]"आहारशुद्धौ सत्त्वशुद्धिः" इत्याहारशुद्धिविधेरबाधाच्च प्राणसंशय एव ॥ २९ ॥

अपि स्मर्यते ॥ [1]"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः" इत्यादिना स्मर्यते च प्राणसंशय एवेति ॥ ३० ॥

शब्दश्चातोऽकामकारे ॥ [2]"तस्माद्ब्राह्मणस्सुरान्न पिबेत्" इति कामकारनिवृत्तिशब्दश्चातएव ; यतः प्राणसंशय एव सर्वान्नानुमतिः ॥ ३१ ॥

इति वेदान्तसारे सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

१॥—२॥—३. नोत्संसृजा इति. पा ॥—४. छा. ५-२-१॥—५. छा. ७-२६-२॥

वेदान्तदीपे—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ वाजिनां छन्दोगानां च प्राणविद्यायां [1]"नह वा एवंविदि किञ्चनानन्नं भवति" इति सर्वान्नानुमतिस्सङ्कीर्त्यते । किं प्राणविदस्सर्वान्नानुमतिस्सर्वदा, उत प्राणात्ययापत्ताविति संशयः । अविशेषात्सर्वदेति पूर्वः पक्षः । अतिशयितशक्तेर्ब्रह्मविदोऽपि उच्छिष्टपरिग्रहणभक्षणयोः प्राणात्ययापत्तावेव दर्शनादल्पशक्तेः प्राणविदः किं पुनरिति प्राणात्ययापत्तावेवेति राद्धान्तः। सूत्रार्थस्तु—चशब्दोऽवधारणे ; प्राणविदस्सर्वान्नानुमतिः प्राणात्यय एव ; कुतः? तद्दर्शनात्—अतिशयितशक्तेर्ब्रह्मविदः प्राणात्यय एव सर्वान्नानुमतिदर्शनात् ॥ २८ ॥

अबाधाच्च ॥ [2]"आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः" इत्याहारशुद्धिविधेरबाधाच्च प्राणात्यय एव ॥ २९ ॥

अपि स्मर्यते ॥ [3]"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति प्राणसंशय एव सर्वान्नानुमतिः स्मर्यते च ॥ ३० ॥

शब्दश्चातोऽकामकारे ॥ यतस्सर्वान्नानुमतिः प्राणात्यये ; अतोऽकामकारे शब्दश्च—कामकारस्य प्रतिषेधकशब्दश्चोपपद्यत इत्यर्थः ॥ अस्ति हि कठानां कामकारप्रतिषेधकश्शब्दः [4]"तस्माद्ब्राह्मणस्सुरां न पिबति पाप्मना [5]नोत्सृजा" इति । पाप्मना संस्पृष्टो न भवानीति मत्वा सुरां न पिबतीत्यर्थः॥

इति वेदान्तदीपे सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

(श्रीशारीरकमीमांसाभाष्ये विहितत्वाधिकरणम् ॥ ८ ॥)

---

# विहितत्वाच्चाश्रमकर्मापि । ३।४।३२॥

यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम् ; तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायां, विद्याङ्गानां सतां [6]केवलाश्रमशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इ-

1. छा. ५-२-१ ॥ २. छा. ७-२६-२ ॥—३ ॥—४ ॥—५. नोत्संसृजा इति. पा ॥— ६. केवलाश्रमिशेषत्वे. पा ॥

ति यज्ञादीनां [१]केवलाश्रमधर्मत्वं न सम्भवति—

( सिद्धान्तः )

इति प्राप्त उच्यते—आश्रमकर्मापि—इति। आश्रमस्य कर्मापि भवति। केवलाश्रमिणापि अनुष्ठेयानीत्यर्थः। कुतः? [२]"यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात्—जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा विद्याङ्गतया च [२]"तमेतं वेदानुवचनेन" इत्यादिना विहितत्वाद्विद्याशेषतयाप्यनुष्ठेयानीत्याह—

## सहकारित्वेन च । ३ । ४ । ३३ ॥

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि। अग्निहोत्रादीनामिव जीवनाधिकारस्वर्गाधिकारवत् विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यत इत्यर्थः ॥ ३३ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

## सर्वथापि त एवोभयलिङ्गात् । ३ । ४ । ३४ ॥

सर्वथा—विद्यार्थत्वे आश्रमार्थत्वेऽपि, त एव यज्ञादय इति प्रतिपत्तव्यम्; न कर्मस्वरूपभेद इत्यर्थः। कुतः? उभयलिङ्गात्—उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्, कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

## अनभिभवं च दर्शयति । ३ । ४ । ३५ ॥

[३]"धर्मेण पापमपनुदति" इत्यादिभिश्च तानेव यज्ञादिधर्मानभिनिर्दिश्य तैर्विद्याया अनभिभवं—पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अहरहरनुष्ठीयमानैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा

---

१. केवलाश्रमिधर्मत्वं. पा ॥— २॥—३. तै. ना. ५०-अनु ॥

विद्योत्पद्यते। अतस्त एवोभयत्र यज्ञादयः॥ ३५॥

इति श्रीशारीरकमीमांसाभाष्ये विहितत्वाधिकरणम्॥ ८॥

---

वेदान्तसारे—विहितत्वाच्चाश्रमकर्मापि॥ यज्ञादिकर्म १"यावज्जीवमग्निहोत्रम्" इत्यादिना विहितत्वात् विद्यारहितकेवलाश्रमिणामप्यनुष्ठेयम्॥

सहकारित्वेन च॥ २"तमेतं वेदानुवचनेन" इत्यादिश्रुतेर्विद्याङ्गतया विधेर्विद्यासहकारित्वेन विदुषा चानुष्ठेयम्॥ ३३॥

सर्वथापि त एवोभयलिङ्गात्॥ उभयत्र विनियोगेऽपि यज्ञादयस्त एव, उभयत्र प्रत्यभिज्ञानाख्याल्लिङ्गात्। कर्मस्वरूपैक्येऽपि विनियोगपृथक्त्वेन न विरोधः॥ ३४॥

अनभिभवं च दर्शयति॥ ३"धर्मेण पापमपनुदति" इति विद्योत्पत्तिप्रतिबन्धकपापनिवर्तनेन विद्याया अनभिभवं कर्मानुष्ठानकार्यश्च दर्शयति॥

इति वेदान्तसारे विहितत्वाधिकरणम्॥ ८॥

---

वेदान्तदीपे—विहितत्वाच्चाश्रमकर्मापि॥ किं यज्ञादयो विद्याङ्गभूताः केवलाश्रमस्याप्यङ्गभूताः, उत नेति संशयः। केवलाश्रमस्याप्यङ्गत्वे नित्यानित्यसंयोगरूपविरोधः प्रसज्यत इति नाङ्गभूताः केवलाश्रमस्येति पूर्वः पक्षः। राद्धान्तस्तु—यदैकेनैव विनियोगेनोभयाङ्गत्वमिष्यते; तदा नित्यानित्यसंयोगविरोधः। इह तु १"यावज्जीवमग्निहोत्रं जुहुयात्" २"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति विनियोगपृथक्त्वेन विरोधः परिह्रियते; यथाऽग्निहोत्रादीनामेव कर्मणाम्। जीवनाधिकारकामनाधिकारयोरिवाधिकारभेदस्यास्फुटत्वात्तत्स्फुटीकरणाय पुनरिह चिन्त्यते। सूत्रार्थस्तु—१"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिना केवलगृहस्थाश्रमिणो जीवननिमित्ततया विहितत्वादेव यज्ञादि केवलाश्रमकर्मापि॥ ३२॥

सहकारित्वेन च॥ २"तमेतं वेदानुवचनेन" इत्यादिना विद्यासाधनत्वेन विहितत्वाच्च विद्यासहकारित्वेन चानुष्ठेयं यज्ञादिकर्म। विनियोगपृथक्त्वेन विरोधः परिह्रियत इत्यभिप्रायः॥ ३३॥

---

१. आपस्तम्बश्रौत. ३-१४-८॥ बह्वृच इति शाबरः॥—२. बृ.६-४-२२॥—३. तै.ना.५०-अनु॥

सर्वथापि त एवोभयलिङ्गात्॥ सर्वथापि—उभयत्र विनियोगेऽपि त एव यज्ञादयः। कुतः? उभयलिङ्गात्—उभयत्र प्रत्यभिज्ञानाख्यलिङ्गात्॥ ३४॥

अनभिभवं च दर्शयति॥ १"धर्मेण पापमपनुदति" इत्यादिभिश्च यज्ञादिधर्मान्निर्दिश्य तैर्विद्यायाः अनभिभवं—पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अत उभयत्र विनियोगात्केवलाश्रमिणां मुमुक्षूणां चानुष्ठेया यज्ञादयः॥

इति वेदान्तदीपे विहितत्वाधिकरणम्॥ ८॥

---

( श्रीशारीरकमीमांसाभाष्ये विधुराधिकरणम्॥ ९॥ )

---

## अन्तरा चापि तु तद्दृष्टेः। ३।४।३६॥

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति; विद्यासहकारिण आश्रमधर्मा इति चोक्तम्। ये पुनराश्रमानन्तरा वर्तन्ते विधुरादयः; तेषां ब्रह्मविद्यायामधिकारोऽस्ति, नवेति विशये—आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायाः, अनाश्रमिणां चाश्रमधर्माभावान्नास्त्यधिकारः—

( सिद्धान्तः )

इति प्राप्त उच्यते—अन्तराचापितु—इति। तुशब्दः पक्षव्यावृत्त्यर्थः; चशब्दोऽवधारणे। अन्तरा वर्तमानानाम्—अनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव। कुतः? तद्दृष्टेः—दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम्। नचाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम्, २"यज्ञेन दानेन तपसानाशकेन" इति दानादीनामाश्रमेषु ३अनैकान्तिकानामप्यनुग्राहकत्वदर्शनात्। यथोर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते; तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताराधनादिभिर्विद्यानुग्रहश्शक्यते कर्तुम्॥ ३६॥

---

१. तै. ना. ५०-अनु॥—२. बृ. ६-४-२२॥—३. अनेकान्तानां. पा॥

## अपि स्मर्यते । ३ । ४ । ३७ ॥

अपिच अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते[१] "जप्येनापि च संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति । संसिध्येत्—जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ॥ ३७ ॥

## विशेषानुग्रहश्च । ३ । ४ । ३८ ॥

न केवलं न्यायस्मृतिभ्यामयमर्थस्साधनीयः; श्रूयते चानाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रहः [२] "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्येत्" इति ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च । ३। ४। ३९॥

तुशब्दोऽवधारणे; अतः-अनाश्रमित्वात् इतरत्—आश्रमित्वमेव ज्यायः; अनाश्रमित्वमापद्विषयम्; शक्तस्य त्वाश्रमित्वमेवोपादेयमित्यर्थः; भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वात्; लिङ्गाच्च-स्मृतेरित्यर्थः । स्मर्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम् [३] "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना । निवृत्तब्रह्मचर्यस्य मृतभार्यस्य च अवैराग्ये सति दारालाभ आपत् ॥ ३९ ॥

इति श्रीशारीरकमीमांसाभाष्ये विधुराधिकरणम् ॥ ९ ॥

---

वेदान्तसारे—अन्तरा चापि तु तद्दृष्टेः ॥ आश्रमानन्तरा वर्तमानो विधुरादिरनाश्रमी; तस्यापि विद्याधिकारोऽस्ति, रैक्वादिष्वनाश्रमिषु ब्रह्मविद्याधिकारदर्शनात् ॥ ३६ ॥

अपि स्मर्यते ॥ अनाश्रमिणोऽपि जपादिना विद्यानुग्रहः स्मर्यते [१] "जप्येनापि च संसिध्येत्" इति ॥ ३७ ॥

---

१. मनु. २-८७ ॥—२. प्रश्नोप. १-१० ॥—३ ॥

विशेषानुग्रहश्च॥ आश्रमानियतधर्मविशेषेण विद्यानुग्रहश्च श्रूयते१ "तपसा ब्रह्मचर्येण श्रद्धया विद्यया चाऽत्मानम्" इत्यादिना ॥ ३८ ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च॥ अनाश्रमित्वादाश्रमित्वं ज्यायः, धर्मभूयस्त्वात्, २"अनाश्रमी न तिष्ठेत्तु" इति स्मृतेश्च॥ ३९॥

इति वेदान्तसारे विधुराधिकरणम् ॥ ९ ॥

वेदान्तदीपे—अन्तरा चापि तु तद्दृष्टेः ॥ विधुरादीनामनाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति, नेति संशयः। आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायाः तदभावात्तेषामधिकार इति पूर्वः पक्षः।राद्धान्तस्तु—ऊर्ध्वरेतस्स्विव रैक्वादिष्वनाश्रमिषु विद्यानिष्ठत्वदर्शनादाश्रमानियतैर्जपोपवासदानादिभिरेव तेषां विद्यानुग्रहो भवतीत्यस्त्येवाधिकारः। सूत्रार्थस्तु—तुशब्दात्पक्षो व्यावृत्तः। चशब्दोऽवधारणे। अन्तराऽपि—आश्रमानन्तरा वर्तमानानामनाश्रमिणामप्यधिकारोऽस्त्येव। कुतः? तद्दृष्टेः-रैक्वादिषु विद्यानिष्ठत्वदृष्टेः ॥ ३६ ॥

अपि स्मर्यते॥ अपि च अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते ३"जप्येनापि च संसिध्येद्ब्राह्मणो नात्र संशयः" इत्यादिना ॥ ३७ ॥

विशेषानुग्रहश्च ॥आश्रमानियतधर्मविशेषेण विद्यानुग्रहश्श्रूयते च१ "तपसा ब्रह्मचर्येण श्रद्धया विद्यया चाऽऽत्मानमन्विच्छेत्" इति ॥ ३८ ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ अतः-अनाश्रमित्वादितरत्-आश्रमित्वं ज्यायः, धर्मभूयस्त्वात्; लिङ्गाच्च-स्मृतेश्चेत्यर्थः २"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति हि स्मर्यते। तस्मादनाश्रमित्वेन विद्यानिष्ठत्वमापद्विषयमित्यभिप्रायः ॥ ३९ ॥

इति वेदान्तदीपे विधुराधिकरणम् ॥ ९ ॥

(श्रीशारीरकमीमांसाभाष्ये तद्भूताधिकरणम् ॥ १० ॥)

# तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः । ३ । ४ । ४०॥

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्या-

१. प्रश्न. १-१० ॥—२ ॥—३. मनु. २-८७ ॥

मधिकारोऽस्ति, नेति चिन्तायां—विधुरादिवदनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसम्भवादस्त्यधिकारः—

—••◆( सिद्धान्तः )◆••—

इति प्राप्त उच्यते—तद्भूतस्य तु नातद्भावः—इति। तुशब्दः पक्षव्यावृत्त्यर्थः; तद्भूतस्य—नैष्ठिकाद्याश्रमनिष्ठस्य, नातद्भावः—अतथाभावः, अनाश्रमित्वेनावस्थानं न सम्भवति; कुतः? तद्रूपाभावेभ्यो नियमात्—तद्रूपाणि-तेषां नैष्ठिकादीनां रूपाणि-वेषाः, धर्मा इत्यर्थः; तेषामभावाः-तद्रूपाभावाः; तेभ्यः शास्त्रैर्नियमात्। नैष्ठिकाद्याश्रमप्रविष्टान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि [1]"ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति, [2]"अरण्यमियात्ततो न पुनरेयात्" इति, [3]"सन्न्यस्याग्निं न पुनरावर्तयेत्"इतिच। अतो विधुरादिवत् नैष्ठिकादीनामनाश्रमित्वेनावस्थानासम्भवान्न तानधिकरोति ब्रह्मविद्या; जैमिनेरपि—इत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति॥ ४०॥

अथ स्यात्—नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्तादधिकारस्सम्भवति; अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम् [4]"अवकीर्णिपशुश्च तद्वत्" इति। अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसम्भवात्कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यति—इति; तत्राह—

## नचाधिकारिकमपि पतनानुमानात्तद्-योगात्। ३।४।४१॥

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां तद्भ्रष्टानां न सम्भवति; कुतः? पतनानुमानात्तदयोगात्—नैष्ठिकादीनां प्रच्युतानां पत-

१. छा. २-२३-१ ॥—२ ॥—३. यजुषि. काठके ॥—४ ॥

नस्मृतेस्तस्य प्रायश्चित्तस्यासम्भवात्—[१]"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति। अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम्।३।४।४२॥

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वम्-उपपातकम्, महापातकेष्वपरिगणितत्वादिति तत्र प्रायश्चित्तस्य भावं—विद्यमानतामप्येके आचार्या मन्यन्ते; अशनवत्—यथा मध्वशनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम्; तदुक्तं स्मृतिकारैः [२] "उत्तरेषां चैतदविरोधि" इति। गुरुकुलवासिनो यदुक्तं, तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां भवतीत्यर्थः। तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्त[३]सम्भवाद्ब्रह्मविद्यायोग्यताप्यस्ति ॥ ४२ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च।३।४।४३॥

तुशब्दो मतान्तरव्यावृत्त्यर्थः; उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः; ब्रह्मविद्यायामनधिकृता इत्यर्थः। कुतः? स्मृतेः-पूर्वोक्तात् पतनस्मरणात्। यद्यपि कल्मषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते,तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति, [१]"प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति स्मृतेरित्यर्थः। आचाराच्च—शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति, तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति; अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥

इति श्रीशारीरकमीमांसाभाष्ये तद्भूताधिकरणम् ॥ १० ॥

---

१. आग्नेय. १६ ५-२३॥—२. गौत. १-प्र. ३-अ. ४-सू॥—३. सद्भावात् .पा॥—४॥

वेदान्तसारे—तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः॥ नैष्ठिकादिनिष्ठस्य प्रच्युत्य स्थितिर्न सम्भवत्येव, नियमात् तद्रूपनिवृत्तिभ्यः। यथा; नियच्छन्ति हि १"अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति२"अरण्यमियात्ततो न पुनरेयात्"इतिच ३"सन्नचस्याग्निं न पुनरावर्तयेत्" इति च। अतस्तेषां प्रच्युत्य स्थित्यभावाद्विद्यानधिकारः। जैमिनेरप्येवम्॥

नचाधिकारिकमपि पतनानुमानात्तदयोगात्॥ ४"अवकीर्णिपशुश्च तद्वत्" इत्यधिकारलक्षणोक्तं प्रायश्चित्तमपि तस्य न सम्भवति, तस्य प्रायश्चित्तानधिकारस्मृतेः तदसम्भवात्, ५"आरूढो नैष्ठिकं धर्मम्"इत्यारभ्य५"प्रायश्चित्तं न पश्यामि" इत्यादिस्मृतेः॥ ४१॥

उपपूर्वमपीत्येके भावमशनवत्तदुक्तम्॥ उपपातकत्वात् प्रायश्चित्तमेके मध्वशननिषेधतत्प्रायश्चित्तवदिति; तदुक्तम् ६"उत्तरेषाञ्चैतदविरोधि" इति॥ ४२॥

बहिस्तूभयथापि स्मृतेराचाराच्च॥ उपपातकत्वेऽपि अन्यथापि कर्माधिकारबहिष्कृता एते; तथा स्मृतेः ५"प्रायश्चित्तन्न पश्यामि येन शुद्ध्येत्स आत्महा" इति, शिष्टबहिष्काराच्च॥ ४३॥

इति वेदान्तसारे तद्भूताधिकरणम्॥ १०॥

---

वेदान्तदीपे—तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः॥ नैष्ठिकवैखानसपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानामपि विद्याधिकारोऽस्ति, नेति संशयः। विधुरादिवज्जपादिभिरनुग्रहसम्भवादस्त्येवाधिकार इति पूर्वः पक्षः।राद्धान्तस्तु—नैष्ठिकादीनां स्वाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणाच्छिष्टबहिष्कृतत्वाच्च तेषामनधिकारः इति।सूत्रार्थस्तु-तद्भूतस्य तु नातद्भावः—नैष्ठिकादिभूतस्यातथाभावो न सम्भवति; कुतः? तद्रूपाभावेभ्यः शास्त्रैः नियमात्, तद्रूपाभावाः नैष्ठिकाद्याश्रमधर्माभावाः; तेभ्यो नियच्छन्ति हि शास्त्राणि। १"ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति नैष्ठिकस्य तत्रैव नियमः; २"अरण्यमियात्ततो न पुनरेयात्" इति च वैखानसस्य, ३"सन्नचस्याग्निं न पुनरावर्तयेत्" इति च परि-

१.छा.२-२३-१॥—२॥—३॥—४॥—५ आग्नेय. १६-५-२३॥—६.गौत. १-प्र. ३-अ. ४-स॥

व्राजकस्य ; अत एव तेषामनाश्रमित्वेनावस्थानाभावाद्विद्याधिकारो न सम्भवति । जैमिनेरप्यविगीतोऽयम् ॥ ४० ॥

**नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥** आधिकारिकम् अधिकारलक्षणोक्तम् १"अवकीर्णिपशुश्च तद्वत्" इत्येतत्प्रायश्चित्तं नैष्ठिकस्य न सम्भवति ; कुतः ? पतनानुमानान्नैष्ठिकस्य तदयोगात् । तस्य हि पतनं स्मर्यते प्रायश्चित्ताभाववचनेन २"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति । अत उपकुर्वाणब्रह्मचारिविषयमाधिकारिकम् ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥** एके प्रायश्चित्तभावमपि मन्यन्ते, यत उपपूर्वम् उपपातकमिदम् ; अशनवत्—मध्वशनादिनिषेधतत्प्रायश्चित्तवद्भवतीत्यर्थः । अत उपकुर्वाणस्य ब्रह्मचारिणः उक्तमाधिकारिकमस्यापि भवतीति । तदुक्तं स्मृतिकारैः ३"उत्तरेषां चैतदविरोधि" इति । उपकुर्वाणे ब्रह्मचारिण्युक्तो धर्मः उत्तरेषा चाश्रमिणां स्वाश्रमाविरोधी भवत्येवेत्यर्थः॥ ४२॥

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥** उभयथापि उपपातकत्वे महापातकत्वेऽपि नैष्ठिकात्प्रच्युतो बहिर्भूतः कर्माधिकारात्, २"प्रायश्चित्तं न पश्यामि" इति स्मृतेः, आचाराच्च ; वर्जयन्ति ह्येनं शिष्टा विद्योपदेशादौ। यद्यपि कल्मषानिबर्हणाय कैश्चित्प्रायश्चित्तमुच्यते, तथापि कर्माधिकारापादिनी शुद्धिस्तेषां न सम्भवतीत्यभिप्रायः ॥ ४३ ॥

इति वेदान्तदीपे तद्भूताधिकरणम् ॥ १० ॥

---

( श्रीशारीरकमीमांसाभाष्ये स्वाम्यधिकरणम् ॥ ११ ॥ )

---

# स्वामिनः फलश्रुतेरित्यात्रेयः ।३।४।४४॥

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि, उतर्त्विक्कर्तृकाणीति चिन्तायां—यजमानकर्तृकाणीत्यात्रेयो मन्यते ; कुतः? फलश्रुतेः—वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शना-

---

१ ॥—२. आग्नेय. १६-५-२३॥—३. गौत. १-प्र. ३-अ. ४-सू.॥

दिह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः । न च गोदोहनादिवदङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः; गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानमन्येनाशक्यम्; इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेः *रसतमत्वानुसन्धानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥

( सिद्धान्तः )

इति प्राप्तेऽभिधीयते—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ।३ । ४ । ४५ ॥

आर्त्विज्यम्—ऋत्विजः कर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते; कुतः? तस्मै हि—प्रयोजनाय ऋत्विक्परिक्रियते; फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः । कर्मविधिषु[1] "ऋत्विजो वृणीते"[2] "ऋत्विग्भ्यो दक्षिणां ददाति" इति ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते; तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव; नच शक्त्यशक्ती तस्य निबन्धनम् । यद्यप्युद्गीथाद्युपासनं पुरुषार्थः, तथापि क्रत्वधिकृताधिकारत्वात्क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात्, [3]"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणात्, ऋत्विक्कर्तृकाण्येतानि; दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात्, [4]"शास्त्रफलं प्रयोक्तरि" इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥

इति श्रीशारीरकमीमांसाभाष्ये स्वाम्यधिकरणम् ॥ ११ ॥

---

वेदान्तसारे—स्वामिनः फलश्रुतेरित्यात्रेयः ॥ उद्गीथाद्युपासनं यज-

---

*रसतमादित्वानुसं. पा ॥—१. यजुः. ६-३-७॥—२ ॥—३. छा. १-१-१० ॥—४. पू. मी. ३-७-१८ ॥

मानेनानुष्ठेयम्, तस्यैव क्रतुवीर्यवत्तरत्वादिफलश्रुतेरित्यात्रेयः ॥ ४४ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ कर्मस्वरूपवत्तदङ्गाश्रयमप्यार्त्विज्यम्; साङ्गफलसाधनकर्मानुष्ठानाय हि ऋत्विक्परिक्रियते॥ ४५॥

इति वेदान्तसारे स्वाम्यधिकरणम् ॥ ११ ॥

---

वेदान्तदीपे—स्वामिनः फलश्रुतेरित्यात्रेयः ॥ उद्गीथाद्युपासनं किं यजमानेनानुष्ठेयम्, उत ऋत्विजेति संशयः । [1]"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति क्रतुवीर्यवत्तरत्वफलं यजमानस्येति दहरोपासनादिवद्यजमानेनानुष्ठेयमिति पूर्वः पक्षः । कर्माङ्गाश्रयत्वादस्योपासनस्य कर्मणश्चार्त्विज्यत्वेन एतदपि ऋत्विजाऽनुष्ठेयं,गोदोहनादिवदिति राद्धान्तः।सूत्रार्थस्तु—स्वामिनः-यजमानस्योद्गीथाद्युपासने कर्तृत्वम्, कुतः? तस्यैव फलश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ क्रत्वङ्गाश्रयत्वेन क्रत्वधिकृतस्यैवास्मिन्नुपासनेऽधिकारात् क्रतोश्चार्त्विज्यत्वेन एतदप्यार्त्विज्यमित्यौडुलोमिराचार्यो मन्यते, यजमानफलसाधनत्वेऽपि क्रतोस्तदनुष्ठानाय हि ऋत्विक्परिक्रियते ॥ ४५ ॥

इति वेदान्तदीपे स्वाम्यधिकरणम् ॥ ११ ॥

---

(श्रीशारीरकमीमांसाभाष्ये सहकार्यन्तरविध्यधिकरणम् ॥)

---

# सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । ३ । ४ । ४६ ॥

[2]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयते, उतानूद्यत इति विशये—मौनपाण्डित्यशब्दयोः ज्ञानार्थत्वात्, [2]"पाण्डित्यं निर्विद्य" इति विहितमेव ज्ञानम् [2]"अथ मुनिः" इत्यनूद्यते; विधिशब्दो नह्यत्र श्रूयत इति ॥

---

१. छा. १-१-१० ॥—२ बृ. ५-५-१ ॥

( सिद्धान्तः )

एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिः—इति। तद्वतः-विद्यावतः ; विध्यादिवत्-विधीयते इति यज्ञादिस्सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते; आदिशब्देन श्रवणमनने गृह्येते; सहकार्यन्तरविधिरि[illegible] विधीयत इति विधिः, सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः; एतदुक्तं भवति—यथा [1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना [2]"शान्तो दान्तः" इत्यादिना च सहकारी यज्ञादिश्शमदमादिश्च विधीयते; यथाच [3]"श्रोतव्यो मन्तव्यः" इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते; तथा [4]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पाण्डित्यं, बाल्यं, मौनमिति त्रितयं विद्यायास्सहकार्यन्तरं विधीयते—इति। मौनं च पाण्डित्यादर्थान्तरमित्याह—पक्षेणेति। मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात् मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम्। यद्यपि [4]"अथ मुनिः" इत्यत्र विधिप्रत्ययो न श्रूयते ; तथापि मौनस्याप्राप्तत्वाद्विधेयत्वमङ्गीकरणीयम्—अथ मुनिस्स्यात्—इति। इदं च मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनालम्बनस्य पुनःपुनस्संशीलनं तद्भावनारूपम्। तदेवं वाक्यार्थः—ब्राह्मणः - विद्यावान् पाण्डित्यं निर्विद्य-उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यामप्राप्तं वेदनं प्रतिलभ्येत्यर्थः; तच्च भगवद्भक्तिकृतसत्त्वविवृद्धिकृतम् ; यथोक्तं [5]"नाहं वेदैः" इत्यारभ्य [5]"भक्त्या त्वनन्यया शक्यः...ज्ञातुम्" इति। श्रुतिश्च [6]"यस्य देवे परा भक्तिः" [7]"नायमात्मा प्रवचनेन" इत्यादिका। बाल्येन तिष्ठासेत्; बाल्यस्वरूपं चानन्तरमेव वक्ष्यते ; बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिस्स्यात्—बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मन-

१. बृ. ६-४-२२ ॥—२. बृ. ६-४-२३ ॥—३. बृ. ४-४-५ ॥—४. बृ. ५-५-१ ॥—५. गी. ११-५३-५४ ॥—६. श्वे. ६-अ. २३ ॥—७. कठ २-२३ ॥

नशीलो भवेत्, निदिध्यासनरूपविद्यावाप्तये। एवमेव त्रितयोपादानेन लब्धविद्यो भवतीत्याह [1]"अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति। अमौनं मौनेतरसहकारिकलापः; तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्पाद्यां लभेतेत्यर्थः। [1]"स ब्राह्मणः केन स्यात्" इति उक्तादुपायात्किमन्योऽप्युपायोऽस्तीति पृष्टे [1]"येन स्यात्तेनेदृश एव" इति–येन मौनपर्यन्तेन ब्राह्मणस्स्यादित्युक्तम्, तेनैवेदृशस्स्यात्; न केनाप्यन्येनोपायेनेति परिहृतम्। अतस्सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत्पाण्डित्यादिकं मौनतृतीयं विद्यायास्सहकार्यन्तरं विधीयते ॥ ४६ ॥

अथ स्यात्–यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते; कथं तर्हि छान्दोग्ये [2]"अभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य [2]"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते; अत आह–

## कृत्स्नभावात्तु गृहिणोपसंहारः ।३।४।४७॥

तुशब्दश्चोद्यं व्यावर्तयति; कृत्स्नभावात्-कृत्स्नेषु भावात्, कृत्स्नेष्वाश्रमेषु विद्यायास्सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः; तस्मात्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये [1]"ब्राह्मणः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरति" इति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य [1]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्राज्यधर्मस्थितिमेव मौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह–

## मौनवदितरेषामप्युपदेशात् ।३।४।४८॥

---

१. बृ. ५-५-१ ॥–२. छा. ८-१५-१ ॥

सर्वेषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः; कुतः? एवं विध [illegible] शवदितरेषामाश्रमिणामपि [1]"त्रयो धर्मस्कन्धाः" इत्यारभ्य [1]"ब्रह्मसंस्थोऽमृतत्वमेति" इति ब्रह्मप्राप्त्युपदेशात्। उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः सर्वाश्रमिसाधारण इति। अतस्सुष्ठूक्तं—यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयते—इति॥ ४८॥

इति श्रीशारीरकमीमांसाभाष्ये सहकार्यन्तरविध्यधिकरणम्॥ १२॥

---

वेदान्तसारे—सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥ [2]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यारभ्य [2]"अथ मुनिः" इत्यत्र विद्यावतो यज्ञादिवत् बाल्यपाण्डित्ययोस्तृतीयं सहकार्यन्तरं मौनं विधीयते, पक्षेण प्रकृष्टमननशीले मुनिशब्दप्रयोगात्; विद्याभ्यासरूपमननमिदमप्राप्तमेव॥ ४६॥

कृत्स्नभावात्तु गृहिणोपसंहारः॥ कृत्स्नेष्वाश्रमिषु विद्यासद्भावात् छान्दोग्ये [3]"अभिसमावृत्य कुटुम्बे" इत्यारभ्य [3]"स खल्वेवं वर्तयन्यावदायुषम्" इति गृहिणोपसंहारस्सर्वेषां प्रदर्शनार्थः। तुशब्दो हि गृहिण एवेति शङ्काव्यावृत्त्यर्थः॥ ४७॥

मौनवदितरेषामप्युपदेशात्॥ [2]"अथ मुनिः" इत्यत्रापि [2]"अथ भिक्षाचर्यंचरति" इति पारिव्राज्येनोपसंहारः प्रदर्शनार्थः, मौनभिक्षाचर्यवदितराश्रमधर्माणां यज्ञादीनामप्युपदेशात्॥ ४८॥

इति वेदान्तसारे सहकार्यन्तरविध्यधिकरणम्॥ १२॥

---

[illegible]—सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥ [2]"तस्माद्ब्राह्मणः पाण्डित्यन्निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र मौनं विद्याङ्गतया विधीयते, उतानूद्यत इति संशयः। मौनस्य मननरूपत्वात् [4]"श्रोतव्यो मन्तव्यः" इति च प्राप्तत्वे-

---

१. छा. २-२३-१॥—२. बृ. ५-५-१॥—३. छा ८-१५-१॥—४. बृ. ४-४-५॥

नानूद्यत इति पूर्वः पक्षः। राद्धान्तस्तु—मुनिशब्दस्य प्रकृष्टमननशीले प्रसिद्धेः, प्रकृष्टमननमुपास्यविषयाभ्यासरूपं विद्यानिष्पत्तये विधीयत इति। सूत्रार्थस्तु—तद्वतः-विद्यावतः, सहकार्यन्तरं-मौनं विधिः; विधीयत इति विधिरिति मौनं विधिरित्युक्तम्। विध्यादिवत्—अत्रापि विधीयत इति विधिः यज्ञदानप्रभृत्याश्रमधर्मः, आदिशब्दाच्छ्रवणमनने गृह्येते। आश्रमधर्मवच्छ्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयमिदं सहकार्यन्तरं मौनमपूर्वं विधीयते; कुत इत्यत आह पक्षेणेति। मुनिशब्दस्य प्रकृष्टमननयुक्ते पक्षेण—प्रसिद्धेरित्यर्थः॥ ४६॥

कृत्स्नभावात्तु गृहिणोपसंहारः॥ सर्वाश्रमिणां विद्यावत्त्वेऽपि च्छान्दोग्ये [१]"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति गृहस्थधर्मेणोपसंहारः सर्वाश्रमधर्मप्रदर्शनार्थः। कुतः? कृत्स्नभावात्—कृत्स्नेषु भावात्—कृत्स्नेष्वाश्रमिषु विद्यायास्सद्भावादित्यर्थः॥ ४७॥

मौनवदितरेषामप्युपदेशात्॥ [२]"अथ मुनिः" इत्यस्मिन्वाक्ये[२]"अथ भिक्षाचर्यं चरति" इति पारिव्राज्यैकान्तधर्मेणोपसंहारोऽपि सर्वाश्रमधर्मप्रदर्शनार्थः, भिक्षाचर्यमौनादिवदितरेषामाश्रमधर्माणां यज्ञादीनामप्युपदेशात्॥ ४८॥

इति वेदान्तदीपे सहकार्यन्तरविध्यधिकरणम्॥ १२॥

---

( श्रीशारीरकमीमांसाभाष्ये अनाविष्काराधिकरणम्॥ )

---

# अनाविष्कुर्वन्नन्वयात्।३।४।४९॥

[२]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम्। बालस्य भावः, कर्म वा बाल्यम्। बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात्कर्मैवेह गृह्यते। तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत डम्भादिरहितत्वमेवेति विशये विशेषाभावात्सर्वमुपादेयम्; नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इति॥

---

१. छा. ८-१५-१॥—२. बृ ५-५-१॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—अनाविष्कुर्वन्निति। बालस्य यत्स्वभावानाविष्काररूपं कर्म; तदुपाददानो वर्तेत विद्वान्। कुतः? अन्वयात्—तस्यैवान्वयात्। १"बाल्येन तिष्ठासेत्" इत्यस्मिन्विधौ तस्यैव ह्यन्वयसम्भवः; इतरेषां विद्याविरोधित्वश्रवणात् २"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" ३"आहारशुद्धौ सत्त्वशुद्धिः" इत्यादिषु॥ ४९॥

इति श्रीशारीरकमीमांसाभाष्ये अनाविष्काराधिकरणम्॥ १३॥

---

वेदान्तसारे—अनाविष्कुर्वन्नन्वयात्॥ १"पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति बाल्यमित्यविशेषेण श्रुतावपि बालकर्म स्वमाहात्म्यानाविष्काररूपं विद्यान्वययोग्यतया विधीयते॥ ४९॥

इति वेदान्तसारे अनाविष्काराधिकरणम्॥ १३॥

---

वेदान्तदीपे—अनाविष्कुर्वन्नन्वयात्॥ १"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत विद्यामाहात्म्यानाविष्कार इति संशयः। १"बाल्येन तिष्ठासेत्" इत्यविशेषविधानात्कामचारादिकं सर्वमप्युपादेयमिति पूर्वः पक्षः; विदुषो विशेषविधानात्, विद्यामाहात्म्याच्च, निषेधश्रुतयो बाधिता भवेयुः—इति। राद्धान्तस्तु—पाण्डित्यप्रयुक्तस्वमाहात्म्यानाविष्कार एव विद्यान्वययोग्यतयोपादेयः, इतरस्य कामचारादेः २"नाविरतो दुश्चरितात्" इत्यादिशास्त्रैर्विद्योत्पत्तिविरोधित्वावगमात्। अतो यथा बालः स्वाभिजनाद्यनाविष्कुर्वन्वर्तते; तथा विद्वान्वर्तेतेत्येतदेव युक्तम्। सूत्रमपि व्याख्यातम्॥ ४९॥

इति वेदान्तदीपे अनाविष्काराधिकरणम्॥ १३॥

---

१. बृ. ५-५-१॥—२. कठ. २-२४॥—३. छा. ७-२६-२॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । ३ । ४ । ५० ॥

द्विविधा विद्या—अभ्युदयफला, मुक्तिफला च । तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्मभिः पुण्यकर्मानन्तरमेव उत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियम इति संशयः । पूर्वकृतैः पुण्यकर्मभिर्हि विद्वान् जायते ; यथोक्तं भगवता [1]"चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन" इति । साधने निर्वृत्ते विलम्बहेत्वभावादनन्तरमेव—

—••◆( सिद्धान्तः )◆••—

इति प्राप्त उच्यते—ऐहिकमप्रस्तुतप्रतिबन्धे—इति।ऐहिकम्—अभ्युदयफलमुपासनम् , अप्रस्तुतप्रतिबन्धे-अप्रस्तुते-प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रतिबन्धे सति तदुत्तरकालमित्यनियमः । कुतः? तद्दर्शनात्-दृश्यते हि प्रबलकर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ [2]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥

इति श्रीशारीरकमीमांसाभाष्ये ऐहिकाधिकरणम् ॥ १४ ॥

---

वेदान्तसारे—ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ अभ्युदयफलमुपासनं स्वसाधनभूतपुण्यकर्मानन्तरमुत्पद्यत इति नायं नियमः, प्रबलकर्मान्तरप्रतिबन्धाभावे तदनन्तरं , प्रतिबन्धे तु तस्मिन्समाप्ते " तदेव वीर्यवत्तरम् " इति प्रतिबन्धाभावे फलदर्शनात् ॥ ५० ॥

इति वेदान्तसारे ऐहिकाधिकरणम् ॥ १४ ॥

---

वेदान्तदीपे—ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ मोक्षव्यतिरिक्ताभ्युदयफलमुपासनं किं स्वसाधनभूतपुण्यकर्मानन्तरमेवोत्पद्यते, उतानन्तरम-

१. गी. ७-१६ ॥—२. छा. १-१-१० ॥

न्यदा वेत्यनियम इति संशयः। साधननिर्वृत्तौ विलम्बहेत्वभावादनन्तरमेवेति पूर्वः पक्षः। राद्धान्तस्तु—अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रस्तुते तदुत्तरकालमित्यनियमः । दृश्यते हि प्रबलकर्मान्तरेण फलप्रतिबन्धः १"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति उद्गीथोपासनस्य क्रतोः कर्मान्तरेण फलाप्रतिबन्धः फलमिति , २"पृथग्ध्यप्रतिबन्धः फलम्" इत्यभ्युपगमात् । सूत्रमपि व्याख्यातम्। ऐहिकम् अभ्युदयफलमित्यर्थः॥ ५० ॥

इति वेदान्तदीपे ऐहिकाधिकरणम् ॥ १४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये मुक्तिफलाधिकरणम्॥ १५॥)

---

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः। ३ । ४ । ५१ ॥

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः, तस्यापि पूर्ववत्प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावगतेः—अत्रापि तस्य हेतोस्समानत्वादित्यर्थः ॥

सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात्प्रतिबन्धासम्भव इत्यधिकाशङ्का ॥

तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां सम्भवात्प्रति३बन्धसम्भव इति परिहारः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥

इति श्रीशारीरकमीमांसाभाष्ये मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

समाप्तश्चाध्यायः ॥ ३ ॥

---

१. छा. १-१-१० ॥—२. शारी. ३-३-४१ ॥—३. प्रतिबन्धरसम्भवतीति परिहारः. पा॥

वेदान्तसारे—एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥

एवं मुक्तिफलोपासनस्यापि प्रतिबन्धभावाभावयोरित्यनियमः, प्रतिबन्धाभाव एवेति फलोदयावस्थावधृतेः ॥ ५१ ॥

इति वेदान्तसारे मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य
चतुर्थः पादः ॥ ४ ॥

---

समाप्तश्चाध्यायः ॥ ३ ॥

---

वेदान्तदीपे—एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥

किं मुक्तिफलान्युपासनानि स्वसाधनभूतातिशयितपुण्यकर्मानन्तरमुत्पद्यन्ते, उत पूर्ववदनियम इति संशयः। मुक्तिफलोपासनसाधनभूतकर्मणां सर्वकर्मभ्यो बलवत्तरत्वेन प्रतिबन्धाभावादनन्तरमेवोत्पद्यत इति पूर्वः पक्षः। तत्रापि ब्रह्मविदपचारस्य ततोऽपि बलवत्तरत्वेन प्रतिबन्धसम्भवादनियम एवेति राद्धान्तः। सूत्रार्थस्तु—मुक्तिफलानामप्येवमनियमः। कुतः? तदवस्थावधृतेः—प्रतिबन्धाभावे सति फलावधृतेः। द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति॥ ५१ ॥

इति वेदान्तदीपे मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे तृतीयस्याध्यायस्य
चतुर्थः पादः ॥ ४ ॥

---

समाप्तश्चाध्यायः ॥ ३ ॥

---



श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(चतुर्थाध्याये - प्रथमः पादः - आवृत्त्यधिकरणम् ॥ १ ॥)

## आवृत्तिरसकृदुपदेशात् । ४ । १ । १ ॥

तृतीयेऽध्याये साधनैस्सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र [1]"ब्रह्मविदाप्नोति परम्" [2]"तमेव विदित्वाऽतिमृत्युमेति"[3]"ब्रह्म वेद ब्रह्मैव भवति"[4]"यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः । किं युक्तम्? सकृत्कृतमिति; [3]"ब्रह्म वेद ब्रह्मैव भवति" इति वेदनमात्रस्यैव विधानात्, असकृदावृत्तौ प्रमाणाभावात् । नचावघातादिवद्वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वाद्यावत्कार्यमावृत्तिरिति शक्यं वक्तुम्, वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्माणि, वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषाद्धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि [5]"फलमत उपपत्तेः" इत्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रार्थः—

(सिद्धान्तः)

१. तै. आन. १-१ ॥—२. श्वे. ३-८ ॥—३. मु. ३-२-९ ॥—४. मु. ३-१-३ ॥—५. शारी. ३-२-३७ ॥

इति प्राप्ते प्रचक्ष्महे—आवृत्तिरसकृत्—इति। असकृदावृत्तमेव वेदनं शास्त्रार्थः; कुतः? उपदेशात्—ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात्। तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन्विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते। तथाहि [1]"मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तोऽर्थः [2]"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंह्रियते; तथा [3]"यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम् [4]"अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्युपासिनोपसंह्रियते; तथा [5]"ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसमानार्थेषु वाक्येषु [6]"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [7]"ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिषु ध्यायतिना वेदनमभिधीयते; ध्यानं च चिन्तनम्; चिन्तनं च स्मृतिसन्ततिरूपम्; न स्मृतिमात्रम्; उपास्तिरपि तदेकार्थः, एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्; तदुभयैकार्थ्यात् असकृदावृत्तसन्ततस्मृतिरिह [8]"ब्रह्म वेद ब्रह्मैव भवति" [9]"ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिषु वेदनादिशब्दैरभिधीयते इति निश्चीयते॥ १॥

## लिङ्गाच्च।४।१।२॥

लिङ्गं - स्मृतिः। स्मृतेश्चायमर्थोऽवगम्यते। स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपं [10]"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा। तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते तथा" इति। तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः॥ २॥

इति श्रीशारीरकमीमांसाभाष्ये आवृत्त्यधिकरणम्॥ १॥

---

१. छा. ३-१८-१॥—२. छा. ३-१८-३,४,५,६॥—३. छा. ४-१-४॥—४. छा. ४-२-२॥—५. तै. आन. १-१॥—६. बृ. ४-४-५॥—७. मु. ३-१-८॥—८. मु. ३-२-९॥—९. श्वे. १-८॥—१०. विष्णु. ६-७-९१॥

वेदान्तसारे—आवृत्तिरसकृदुपदेशात् ॥ १"ब्रह्मविदाप्नोति परम्" इत्यादिषु मोक्षसाधनं वेदनमसकृदावृत्तम्, "विद्यात्" "उपासीत" इति विद्युपास्योरुपक्रमोपसंहारयोर्व्यतिकरेणोपदेशात् ॥ १ ॥

लिङ्गाच्च ॥ लिङ्गं - स्मृतिः ; २"मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता" ३"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा। तद्ध्यानम्"इत्यादिस्मृतेश्च ॥ २ ॥

इति वेदान्तसारे आवृत्त्यधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—आवृत्तिरसकृदुपदेशात् ॥ १"ब्रह्मविदाप्नोति परम्" ४"तमेवं विद्वानमृत इह भवति" इत्यादिवेदान्तविहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः । सकृत्कृतमेवेति पूर्वः पक्षः, ५"स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति"इत्यादौ वेदनस्यैव मुक्त्युपायत्वप्रतिपादनात्, सकृत्कृतेऽपि वेदने शास्त्रार्थनिर्वृत्तेः, तस्यासकृदावृत्तौ प्रमाणाभावात् । राद्धान्तस्तु—६"यस्तद्वेद यत्स वेद स मयैतदुक्तः"इत्युपक्रम्य, ७"अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्येकस्मिन्वाक्ये विद्युपास्योर्व्यतिकरेण प्रयोगदर्शनात्, समानार्थेषु १"ब्रह्मविदाप्नोति परम्" ८"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिषु ध्यानविद्योर्व्यतिकरदर्शनाच्च, ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं स्मृतिसन्तानरूपवेदनमेव शास्त्रार्थ इति निश्चीयते।सूत्रार्थस्तु—*आवृत्तिरसकृत्-ब्रह्मप्राप्तिसाधनं वेदनमसकृदावृत्तमेव शास्त्रार्थः ; वेदनं ध्यानशब्दवाच्यमित्यर्थः । कुतः? उपदेशात्—९"ओमित्येवं ध्यायथात्मानं" १०"निचाय्य तं मृत्युमुखात्प्रमुच्यते"११"आत्मानमेव लोकमुपासीत" ८"आत्मा वा अरे द्रष्टव्यः" इत्यादिना उपासनोपसंहारोपदेशात् । उपासनं चाविच्छिन्नस्मृतिसन्तानरूपमिति पूर्वमेवोक्तम् ॥ १ ॥

लिङ्गाच्च ॥ लिङ्गं-स्मृतिः। स्मर्यते चायमर्थः२"मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात्"१२"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपा-

---

१. तै.आ. १-१॥—२. गी. १२-६, ७॥—३. विष्णु ६-७-९१॥—४. पुरुषसूक्तम्॥ ५. मु. ३ २-९ ॥—६. छा. ४-१-४ ॥—७. छा. ४-२-२ ॥—८. बृ. ४-४-५॥—*वेदनशास्त्रार्थ आवृत्तिः असकृत्—असकृदावृत्तं वेदनं ध्यानशब्दवाच्यमित्यर्थः. पा॥—९. मु. २-२-६ ॥—१०. कठ. ३-१५ ॥—११ ॥—१२. गी. १२-३ ॥

सते" १"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा। तद्ध्यानं प्रथमैष्षड्भिरङ्गै-र्निष्पाद्यते तथा" इति ॥ २ ॥

इति वेदान्तदीपे आवृत्त्यधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये आत्मत्वोपासनाधिकरणम् ॥ )

---

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च।४।१।३॥

इदमिदानीं चिन्त्यते—किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेन—इति। किं युक्तम्?; अन्यत्वेनेति। कुतः? उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः। अर्थान्तरत्वं च २"अधिकं तु भेदनिर्देशात्" ३"अधिकोपदेशात्" ४"नेतरोऽनुपपत्तेः" इत्यादिषूपपादितम्। यथावस्थितं च ब्रह्मोपास्यम्; अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात्—५"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात्। अतोऽन्यत्वेनोपास्यमिति ॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—आत्मेति तु—इति। तुशब्दोऽवधारणे; उपासितुरात्मेत्येवोपास्यम्, उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा; तथा स्वात्मनोऽपि परं ब्रह्मात्मेत्येवोपासीतेत्यर्थः। कुतः? एवं ह्युपगच्छन्ति पूर्वे उपासितारः ६"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति। उपासितुरर्थान्तरभूतं ब्रह्मोपासितारोऽहमिति कथमभ्युपगच्छन्तीत्यत्राह—ग्राहयन्ति च—इति।इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्तीत्यर्थः। ७"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यम-

---

१. विष्णु. ६-७-९१ ॥—२. शारी. २-१-२२ ॥—३. शारी. ३-४-८॥—४. शारी. १-१-१७ ॥—५. छा. ३-१४-१ ॥—६ ॥—७. बृ-५-७-२२. माध्यन्दिनशाखा ॥

यति स त आत्माऽन्तर्याम्यमृतः" इति; तथा १"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्" २"सर्वं खल्विदं ब्रह्म तज्जलानिति" इति च सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा; अतस्स त आत्मा; अतो यथा प्रत्यगात्मनस्स्वशरीरं प्रत्यात्मत्वात् 'देवोऽहं मनुष्योऽहम्' इत्यनुसन्धानम्; तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसन्धानं युक्तमिति । एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः ३"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति व्यतिकरेणोक्तवन्तः । एवं च ४"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" ५"अकृत्स्नो ह्येष आत्मेत्येवोपासीत" ६"सर्वं तं परादाद्योऽन्यत्राऽऽत्मनस्सर्वं वेद" इत्यात्मत्वाननुसन्धाननिषेधः, ७"पृथगात्मानं प्रेरितारं च मत्वा" इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्; अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो रक्षितः; स्वशरीरात्स्वात्मनोऽधिकत्वानुसन्धानवत्स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात्पृथक्त्वानुसन्धानविधानं च रक्षितम् । अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्ये ५"अकृत्स्नो ह्येषः" इत्युक्तम् । अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

वेदान्तसारे—आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ यद्यपि ८"अधिकन्तु भेदनिर्देशात्" ९"अधिकोपदेशात्" इत्यादिषु प्रत्यगात्मनोऽर्थान्तरत्वं ब्रह्मणः प्रतिपादितम्; तथाप्युपासिता १०"अहं ब्रह्मास्मि" इत्येवोपासीत;

१. छा. ६-८-४ ॥—२. छा. ३-१४-१ ॥—३ ॥—४. बृ. ३-४-१० ॥—५॥—६. बृ. ६-५-७॥—७. श्वे. १-६ ॥—८. शारी. २-१-२२॥—९. शारी. ३-४-८ ॥—१०. बृ. ३-४-१० ॥

यतः पूर्वे उपासितारः १"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इत्यात्मेत्येवोपगच्छन्ति । उपासितुरर्थान्तरमपि ब्रह्म तानुपासितॄन् स्वात्मभूतं ग्राहयन्ति शास्त्राणि२"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा"इत्यादीनि। यथा 'मनुष्योऽहम्'इति मनुष्यशरीरस्य स्वात्मप्राकारैकस्वभावतया प्रकारिणि स्वात्मनि अहंशब्दस्य तद्बुद्धेश्च पर्यवसानम् ; तथा स्वात्मनोऽपि परमात्मशरीरतया तत्प्रकारस्वभावत्वेन अहंशब्दतद्बुद्ध्योः परमात्मनि पर्यवसानमिति ३"अहं ब्रह्म" इत्येवोपास्यमिति ॥ ३ ॥

इति वेदान्तसारे आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ किमुपास्यं ब्रह्मोपासितुरन्यत्वेनानुसन्धेयम् , उतात्मत्वेनेति संशयः । ४"अधिकं तु भेदनिर्देशात्"५"अधिकोपदेशात्" इत्यादिषूपासितुरुपास्यस्यार्थान्तरत्वेनैवोपपादनात् यथावस्थितस्यैवोपास्यत्वाच्चान्यत्वेनोपास्यमिति पूर्वः पक्षः । राद्धान्तस्तु—१"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति पूर्वे उपासितारः उपास्यमात्मत्वेनोपगच्छन्ति । अत आत्मेत्येवोपास्यम् । तानुपासितॄन्प्रत्यर्थान्तरभूतस्यापि ब्रह्मणः उपासितुरात्मत्वं ग्राहयन्ति शास्त्राणि २"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इत्यारभ्योपासिता परमात्मनश्शरीरम् , परमात्मा चोपासितुरात्मेति प्रतिपादनेन ; तथा ६"सर्वं खल्विदं ब्रह्म तज्जलान्" इति ७"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः...ऐतदात्म्यमिदं सर्वम्" इति च तदायत्तस्वरूपस्थितिप्रवृत्तिताप्रतिपादनेन च । एवमुपासितुस्स्वात्मनोऽप्यात्मत्वाद्ब्रह्मणः यथावस्थितस्वात्मशरीरकब्रह्मानुसन्धानेऽहमित्येवानुसन्धेयम्।यथा'मनुष्योऽहमस्मि'इति स्वशरीरस्य स्वप्रकारैकस्वभावतया प्रकारिणि स्वात्मनि पर्यवसानम् , तथा स्वात्मनोऽहंप्रत्ययोऽहंशब्दश्च न केवलस्वात्मविषयौ, परमात्मशरीरतया तद्विशेषणत्वेनैव स्वात्मनोऽवस्थानात् । सूत्रमपि व्याख्यातम् ॥ ३ ॥

इति वेदान्तदीपे आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

१॥—२. बृ. ५-७-२२ मा. पा॥—३. बृ. ३-४-१०॥—४. शारी. २-१-२२॥ —५. शारी. ३-४-८ ॥—६. छा. ३-१४-१ ॥—७. छा. ६-८-४ ॥

# न प्रतीके न हि सः । ४ । १ । ४ ॥

[1]"मनो ब्रह्मेत्युपासीत" [2]"स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसन्धानं कार्यम्, उत न–इति चिन्तायां [1]"मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वसाम्याद्ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेति ॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते–न प्रतीके–इति । प्रतीके नात्मत्वानुसन्धानं कार्यम्; न हि सः—नह्युपासितुरात्मा प्रतीकः । प्रतीकोपासनेषु प्रतीक एवोपास्यः; न ब्रह्म । ब्रह्म तु तत्र दृष्टिविशेषणमात्रम् । प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम्; तत्रोपास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसन्धेयम् ॥ ४ ॥

नन्वत्रापि ब्रह्मैवोपास्यम्; ब्रह्मण उपास्यत्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात् । अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति; अत आह—

# ब्रह्मदृष्टिरुत्कर्षात् । ४ । १ । ५ ॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता; न ब्रह्मणि मनआदिदृष्टिः, ब्रह्मणो मनआदिभ्य उत्कर्षात्; तेषां च विपर्ययात् । उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी; भृत्ये तु राजदृष्टिरभ्युदयाय ॥ ५ ॥

इति श्रीशारीरकमीमांसाभाष्ये प्रतीकाधिकरणम् ॥ ३ ॥

---

१. छा. ३-१८-१ ॥—२. छा. ७-१-५ ॥

वेदान्तसारे -न प्रतीके न हि सः ॥ १"मनो ब्रह्म" इत्यादिप्रतीके तु नात्मेति ग्रहणम् ; न हि तत्र सः-परमात्मोपास्यः ;परमात्मदृष्ट्या हि मनः-प्रभृतीति ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ब्रह्मण उत्कृष्टत्वात्तद्दृष्ट्या मनआद्युपासनं ह्यभ्युदयाय भवतीति ॥ ५ ॥

इति वेदान्तसारे प्रतीकाधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—न प्रतीके न हि सः ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ १"मनो ब्रह्मेत्युपासीत" इत्यादिषु प्रतीकोपासनेष्वप्यात्मत्वेनानुसन्धानं कर्तव्यम् , उत नेति संशयः । १"मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वाविशेषादात्मत्वेवानुसन्धानमिति पूर्वः पक्षः । राद्धान्तस्तु—न प्रतीके आत्मत्वानुसन्धानं कार्यम् ; कुतः? न हि मनआदिरुपासितुरात्मा, न च तत्र ब्रह्मोपास्यम् ; ब्रह्मदृष्ट्या मनआदिरुपास्यः; अपकृष्टे उत्कृष्टदृष्टिरभ्युदयाय भवति; यथा भृत्यादौ राजदृष्टिः । सूत्रद्वयं च व्याख्यातम् ॥ ४ ॥ ५ ॥

इति वेदान्तदीपे प्रतीकाधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये आदित्यादिमत्यधिकरणम् ॥ )

---

# आदित्यादिमतयश्चाङ्ग उपपत्तेः । ४ । १ । ६ ॥

२"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः—किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या, उतादित्यादिषूद्गीथादिदृष्टिः"—इति।उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायात्, उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्यः उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिः—

( सिद्धान्तः )

इति प्राप्तेऽभिधीयते—आदित्यादिमतयश्चाङ्गे—इति। चशब्दोऽव-

---

१. छा. ३-१८-१ ॥—२. छा. १-३-१ ॥

धारणे ; क्रत्वङ्गे उद्गीथादावादित्यादिदृष्टय एव कार्याः ; कुतः? उपपत्तेः-आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः ; आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम् ; अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥

इति श्रीशारीरकमीमांसाभाष्ये आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ [1]"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादावप्यादित्यादेरेवोत्कृष्टत्वात् उद्गीथादौ तद्दृष्टयः कार्याः ॥ ६ ॥

इति वेदान्तसारे आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ [1]"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयोपासनेषु किमुद्गीथादावादित्यादिदृष्टिः कार्या, उतादित्यादावुद्गीथादिदृष्टिरिति संशयः । कर्मणः फलसाधनतयोत्कर्षात् आदित्यादेर्देवतात्वेन तद्गुणत्वाच्चादित्यादावुद्गीथादिदृष्टिः कार्येति पूर्वः पक्षः।राद्धान्तस्तु—कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेति आदित्यादेरेवोत्कर्षोपपत्तेः आदित्यादिमतय एव कर्माङ्गोद्गीथादौ कार्याः । सूत्रं च व्याख्यातम् ॥ ६ ॥

इति वेदान्तदीपे आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये आसीनाधिकरणम् ॥ ५ ॥ )

---

## आसीनस्सम्भवात् । ४ । १ । ७ ॥

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन्नासीनश्शयानस्तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत्—

---

1. छा. १-३-१ ॥

( सिद्धान्तः )

इति प्राप्त उच्यते—आसीनः—इति। आसीन उपासनमनुतिष्ठेत् ; कुतः? सम्भवात्—आसीनस्यैव ह्येकाग्रचित्ततासम्भवः; स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयने च निद्रासम्भवात्। पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥

## ध्यानाच्च । ४ । १ । ८ ॥

[१]"निदिध्यासितव्यः" इति ध्यानरूपत्वादुपासनस्य, एकाग्रचित्तताऽवश्यंभाविनी। ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

## अचलत्वं चापेक्ष्य । ४ । १ । ९ ॥

[२]निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते [३]"ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं, ध्यायतीव द्यौः, ध्यायन्तीवापो, ध्यायन्तीव पर्वताः" इति। अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव सम्भवेत् ॥ ९ ॥

## स्मरन्ति च । ४ । १ । १० ॥

स्मरन्ति चासीनस्यैव ध्यानं [४]"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम्। तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः। उपविश्याऽसने युञ्ज्याद्योगमात्मविशुद्धये" इति ॥ १० ॥

## यत्रैकाग्रता तत्राविशेषात् । ४ । १ । ११॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलो यो देशः

---

१. बृ. ६-५-६ ॥—२. निश्चलत्वं ह्यपेक्ष्य. पा.॥—३. छा. ७-६-१ ॥—४. गी. ६-११-१२ ॥

कालश्च, स एवोपासनस्य देशः कालश्च । [१]"समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह ; न तु देशं नियच्छति, [१]"मनोऽनुकूले" इति वाक्यशेषात् ॥ ११ ॥

इति श्रीशारीरकमीमांसाभाष्ये आसीनाधिकरणम् ॥ ५ ॥

---

**वेदान्तसारे—आसीनस्सम्भवात् ॥** आसीन उपासनं कुर्यात् , तस्यैवैकाग्र्यसम्भवात् ॥ ७ ॥

**ध्यानाच्च ॥** [२]"निदिध्यासितव्यः" इत्युपासनस्य ध्यानरूपत्वाच्चासीनः ॥

**अचलत्वं चापेक्ष्य ॥** पृथिव्यादेरचलत्वं चापेक्ष्य [३]"ध्यायतीव पृथिवी" इति प्रयोगात् मनसो निश्चलत्वमासीनस्यैव ॥ ९ ॥

**स्मरन्ति च ॥** [४]" उपविश्याऽऽसने युञ्ज्यात् " इत्यादिना ॥ १० ॥

**यत्रैकाग्रता तत्राविशेषात् ॥** यत्रैकाग्रता, तत्र देशे तत्र काले उपासीतेति देशकालविशेषाश्रवणात् ॥ ११ ॥

इति वेदान्तसारे आसीनाधिकरणम् ॥ ५ ॥

---

**वेदान्तदीपे—आसीनस्सम्भवात् ॥** किमिदं ब्रह्मोपासनमासीनः कुर्यात् , उतासीनश्शयानस्तिष्ठन्गच्छन्वेत्यनियमः इति संशयः । विशेषाश्रवणादनियमः इति पूर्वः पक्षः । राद्धान्तस्तु—आसीनस्यैवैकाग्रतासम्भवात्, एकाग्रतामूलत्वाच्चोपासनस्य, आसीनः कुर्यात् । सूत्रमपि व्याख्यातम् ॥ ७ ॥

**ध्यानाच्च ॥** [२]" निदिध्यासितव्यः" इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रचित्तताऽवश्यम्भाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितं तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपम् ॥ ८ ॥

**अचलत्वं चापेक्ष्य ॥** निश्चलत्वं चापेक्ष्य ध्यानवाचोयुक्तिः पृथिव्यादिषु दृश्यते [३]" ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः " इत्यादिका । अतो ध्यायतः पृथिव्यादिवदचलत्वमासीनस्यैव सम्भवति ॥ ९ ॥

**स्मरन्ति च ॥** स्मरन्तिचासीनस्यैव ध्यानम् [४]" उपविश्याऽऽसने युञ्ज्याद्यो-

---

१ ॥—२. बृ. ६-५-६ ॥—३. छा. ७-६-१ ॥—४. गी. ६-१२ ॥

गमात्मविशुद्धये" इति ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् ॥ यस्मिन्देशे यस्मिंश्च काले मनस एकाग्रता; तत्र देशे काले चोपासनं कार्यम्; [1]"शर्करादिरहिते मनोनुकूले शुचौ देशे" इत्येतदतिरिक्तविशेषाग्रहणात्। यथा देशकालयोरेकाग्रतायामविशेषः, न तथा स्थितिगत्यादौ; आसीनस्य तु विशेषोऽस्तीत्यभिप्रायः ॥ ११ ॥

इति वेदान्तदीपे आसीनाधिकरणम् ॥ ५ ॥

---

(श्रीशारीरकमीमांसाभाष्ये आप्रयाणाधिकरणम् ॥ ६ ॥)

---

## आप्रयाणात्तत्रापि हि दृष्टम्। ४। १। १२॥

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव संपाद्यम्, उताप्रयाणात्प्रत्यहमनुवर्तनीयमिति विशये-एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम्—

(सिद्धान्तः)

इति प्राप्त उच्यते—आप्रयाणात्—इति। आमरणादनुवर्तनीयम्; कुतः? तत्रापि हि दृष्टम् उपासनोद्योगप्रभृत्याप्रयाणान्मध्ये यः कालः, तत्र सर्वत्रापि दृष्टमुपासनं [2]"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति ॥ १२ ॥

इति श्रीशारीरकमीमांसाभाष्ये आप्रयाणाधिकरणम् ॥ ६ ॥

---

वेदान्तसारे— आप्रयाणात्तत्रापि हि दृष्टम्॥ आप्रयाणादहरहरुपासनं कार्यम्, [2]"स खल्वेवं वर्तयन्यावदायुषम्" इति दर्शनात् ॥ १२ ॥

इति वेदान्तसारे आप्रयाणाधिकरणम् ॥ ६ ॥

---

वेदान्तदीपे—आप्रयाणात्तत्रापि हि दृष्टम्॥ तदिदमपवर्गसाधनमु-

---

१ ॥—२. छा. ८-१५-१ ॥

पासनमेकस्मिन्नहनि कार्यम्, उत प्रत्यहमाप्रयाणादनुवर्तिनीयमिति संशयः। एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम्। [१]"यावदायुषम्" इति तु वचनं विधिशब्दस्याभावाद्विद्यायाः फलेनोपसंहारपरमिति पूर्वः पक्षः। राद्धान्तस्तु—आ प्रयाणात् अनुवर्तनीयम्; कुतः? तत्रापि हि दृष्टं [१]"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति। अप्राप्तत्वेनानुवादत्वासम्भवाद्विधिरेवायमिति ॥ १२ ॥

इति वेदान्तदीपे आप्रयाणाधिकरणम् ॥ ६ ॥

---

( श्रीशारीरकमीमांसाभाष्ये तदधिगमाधिकरणम् ॥ ७ ॥ )

---

# तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४ । १ । १३ ॥

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते; ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते [२]"तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" [३]"तस्यैवाऽऽत्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्युत्तराघाश्लेषः, [४]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" [५]"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः। एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते, नेति संशयः। किं युक्तम्? नोपपद्येते इति। कुतः? [६]"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते। न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते; येन प्रायश्चि-

१. छा. ८-१५-१ ॥—२. छा. ४-१४-३ ॥—३. ॥—४. छा. ५-२४-३ ॥—५. मु. २-२-८ ॥—६. ब्रह्मवैवर्ते. प्रकृतिखण्डे. २६-अ. ७०-श्लो ॥

त्तेनाघविनाश उच्यते। विद्या हि १"ब्रह्मविदाप्नोति परम्" २"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते। अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—तदधिगमे—इति। विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते; कुतः? एवंविधं हि विद्यामाहात्म्यमवगम्यते ३"एवंविदि पापं कर्म न श्लिष्यते" ४"एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात्। न च ५"नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः, भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम्; एतत्तूत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यमुत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते। यथा अग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्; एवमत्रापीति न कश्चिद्विरोधः। अघस्याश्लेषकरणं - वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं, प्रत्यवायं च कुर्वन्ति। अघस्य विनाशकरणम्—उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्; ६"नाविरतो दुश्चरितात्" इत्यादिभिश्शास्त्रैराप्रयाणादहरहरुत्पद्यमानाया

१. तै. आन. १-१॥—२. मु. ३-२-९॥— ३. छा. ४-१४-३॥—४. छा. ५-२४-३॥—५. ब्रह्मवैवर्ते. प्रकृतिखण्डे. २६-७०॥—६. कठ. २-२४॥

उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात्॥

इति श्रीशारीरकमीमांसाभाष्ये तदधिगमाधिकरणम् ॥ ७ ॥

---

वेदान्तसारे—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वकृताघनाशः, उत्तराघाश्लेषश्च भवति, १ "एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" २ "एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतेः ॥ १३ ॥

इति वेदान्तसारे तदधिगमाधिकरणम् ॥ ७ ॥

---

वेदान्तदीपे—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ किं सम्भवतः, उत नेति संशयः। ३ "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भोगादेव कर्मक्षयश्रवणादश्लेषविनाशश्रुतिः कथञ्चिद्विद्यास्तुत्यर्थतया नेयेति पूर्वः पक्षः। राद्धान्तस्तु—द्वयोश्शास्त्रयोर्भिन्नविषयत्वेन विरोधाभावात्सम्भवत एव ; कर्मणां फलजननसामर्थ्यं द्रढयति ३ "नाभुक्तं क्षीयते" इति ; २ "एवमेवंविदि पापं कर्म न श्लिष्यते" १ "एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" इति च श्रुतिर्विद्यायास्तत्सामर्थ्यनिवारणशक्तिविषयेऽति ; यथा अग्नेजसोश्शीतजननतन्निवारणशक्तिविषये प्रमाणे विरुध्येते। इति सूत्रमपि व्याख्यातम् ॥ १३ ॥

इति वेदान्तदीपे तदधिगमाधिकरणम् ॥ ७ ॥

---

(श्रीशारीरकमीमांसाभाष्ये इतराधिकरणम् ॥ ८ ॥)

---

# इतरस्याप्येवमसंश्लेषः पाते तु । ४ । १ । १४॥

उत्तरपूर्वाघयोर्विद्यया अश्लेषविनाशावुक्तौ ; इतरस्य-पुण्यस्यापि, एवम्—उक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्याद्व्यपदेशाच्च। भवति च व्यपदेशः—उभे सुकृतदुष्कृते निर्दि-

१. छा. ५-२४-३ ॥—२. छा. ४-१४-३ ॥—३. ब्रह्मवैवर्ते. प्रकृतिखण्डे. २६-७० ॥

श्य [1]"सर्वे पाप्मानोऽतो निवर्तन्ते" इति, [2]"तत्सुकृतदुष्कृते धूनुते" इतिच। मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्मशब्देन व्यपदेशः। सुकृतस्यापि शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्याया अविरोधशङ्कां निवर्तयितुमतिदेशः। ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव; कथं तेषां विरोधाद्विनाश उच्यते; तत्राह —पाते तु-इति। शरीरपाते तु तेषां विनाशः; शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥

इति श्रीशारीरकमीमांसाभाष्ये इतराधिकरणम् ॥ ८ ॥

---

वेदान्तसारे—इतरस्याप्येवमसंश्लेषः पाते तु ॥ विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादेवमश्लेषविनाशौ। वृष्ट्यन्नायुरारोग्यादिविद्यानुगुणफलस्य कर्मणः शरीरपातादूर्ध्वमफलत्वम् ॥ १४ ॥

इति वेदान्तसारे इतराधिकरणम् ॥ ८ ॥

---

वेदान्तदीपे—इतरस्याप्येवमसंश्लेषः पाते तु ॥ किमसंश्लेषविनाशौ पुण्यकर्मणोऽपि समानौ? उत नेति संशयः। पुण्यकर्मफलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावान्न समानाविति पूर्वः पक्षः। राद्धान्तस्तु—मुमुक्षोर्मोक्षविरोधित्वेनानिष्टत्वसाम्यादश्लेषविनाशौ समानावेव। सूत्रार्थस्तु—इतरस्य पुण्यस्याप्यनिष्टफलत्वसाम्यादेवम् अश्लेषविनाशौ; विद्यानुगुणस्य तु वृष्ट्यन्नारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः ॥ १४ ॥

इति वेदान्तदीपे इतराधिकरणम् ॥ ८ ॥

---

(श्रीशारीरकमीमांसाभाष्ये अनारब्धकार्याधिकरणम्॥३॥)

---

## अनारब्धकार्ये एव तु पूर्वे तदवधेः।४।१।१५॥

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोस्सुकृतदुष्कृतयोरश्लेषविनाशावु-

---

१. छा. ८-४-१ ॥—२. कौषी. १-४

क्तौ; ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये [1]"सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफलस्याविशेषश्रवणाद्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत्संस्कारवशादप्युपपत्तेरविशेषेण—

(सिद्धान्तः)

इति प्राप्ते उच्यते–अनारब्धकार्ये एव तु पूर्वे–इति। विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये–अप्रवृत्तफले एव विद्यया विनश्यतः; कुतः? तदवधेः–[2]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः। न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

वेदान्तसारे—अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ विद्याधिगतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः; [2]"तस्य तावदेवचिरम्" इति शरीरपातावधिश्रुतेः ॥ १५ ॥

इति वेदान्तसारे अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

वेदान्तदीपे–अनारब्धकार्ये एव तु पूर्वे तदवधेः॥ विद्योत्पत्तेः पूर्वकृतयोः पुण्यपापयोरविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति संशयः। [1]"सर्वे पाप्मानः प्रदूयन्ते" इति विशेषाभावादविशेषेणेति पूर्वः पक्षः। राद्धान्तस्तु—[2]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्युत्पन्नविद्यस्यापि शरीरमोक्षावधित्वश्रुतेः, सर्वविनाशे शरीरस्थित्यनुपपत्तेश्चानारब्धकार्ययोरेव विनाशः। सूत्रं च व्याख्यातम् ॥ १५ ॥

इति वेदान्तदीपे अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

१. छा. ५-२४-३ ॥ २. छा. ६-१४-२ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।४।१।१६

'इतरस्याप्येवमसंश्लेषः' इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः, अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्त उच्यते—

( सिद्धान्तः )

अग्निहोत्रादि तु—इति । तुशब्दस्सुकृतान्तरेभ्यो विशेषणार्थः; अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासम्भवादनुष्ठेया एव; तदसम्भवश्च तत्कार्यार्थत्वात्तेषाम्; विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम्; कथमिदमवगम्यते? तद्दर्शनात्; दृश्यते हि[१] "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वम् । विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमकर्माण्यहरहरनुष्ठेयमेव; अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्थाः, विद्योत्पत्तेः प्राचीनं च सुकृतं [२]"यावत्सम्पातमुषित्वा" [३]"प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्; भुक्तशिष्टं च प्रारब्धफलम्; "सुहृदस्साधुकृत्याम्" इत्यस्य को विषयः? तत्राह—

## अतोऽन्यापि ह्येकेषामुभयोः । ४ । १ । १७ ॥

अतः—अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थायाः अन्यापि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव; तद्विषयमिदमेकेषां शाखिनां वचनं

१. बृ-६-४-२२ ॥—२. छा. ५-१०-५ ॥—३. बृ. ६-४-६ ॥

१"तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्याम्" इति। विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

## यदेव विद्ययेति हि। ४। १। १८ ॥

२"यदेव विद्यया करोति.. तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धस्सूच्यते हि। अतो विदुषोऽनुष्ठितप्रतिबद्धफलविषयं १"सुहृदस्साधुकृत्याम्" इति शाट्यायनकम् ॥ १८ ॥

इति श्रीशारीरकमीमांसाभाष्ये अग्निहोत्राद्यधिकरणम् ॥ १० ॥

---

वेदान्तसारे—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ अग्निहोत्राद्याश्रमकर्म, विद्योत्पत्त्याख्यकार्यायैव आप्रयाणादनुष्ठेयं ३"तमेतं वेदानुवचनेन" इत्यादिना विद्योत्पत्तिकार्यत्वं ह्याश्रमधर्मस्य दृष्टम् ॥ १६ ॥

अतोऽन्यापि ह्येकेषामुभयोः ॥ १"तस्य पुत्रा दायमुपयन्ति" १"द्विषन्तः पापकृत्यां सुहृदस्साधुकृत्याम्" इत्यादिवचनस्याग्निहोत्रादेरन्याप्यनादिकालप्रवृत्ता साधुकृत्या प्रबलकर्मप्रतिबद्धफला, उत्तरा वृष्ट्यन्नादिविद्यानुगुणफला प्रतिबद्धा चेति पूर्वोत्तरकृतयोरुभयोरप्ययस्त्येव विषयः ॥ १७ ॥

यदेव विद्ययेति हि ॥ २"यदेव विद्यया" इत्यत्र फलप्रतिबन्धोऽस्तीति ह्युक्तम् ॥ १८ ॥

इति वेदान्तसारे अग्निहोत्राद्यधिकरणम् ॥ १० ॥

---

वेदान्तदीपे—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेयः, उत नेति संशयः। सुकृतदुष्कृतयोरश्लेषविनाशाभिधानादाश्रमधर्मस्यापि सुकृतत्वसाम्येन कार्याश्लेषादननुष्ठेय इति पूर्वः पक्षः। राद्धान्तस्तु—आश्रमधर्मस्य तु विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैवा-

१ ॥—२. छा. १-१-१० ॥—३. बृ. ६-४-२२ ॥

नुष्ठेयः। दृश्यते हि—१"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिना विद्योत्पत्तिकार्यत्वम्। विद्या चाप्रयाणादहरहरभ्यासाधेयातिशयोत्पाद्यैव। सूत्रं च व्याख्यातम् ॥ १६ ॥

यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था ; पूर्वकृता च साधुकृत्या अनुभूतफला प्रारब्धफलाच ;२"सुहृदस्साधुकृत्याम्" इत्यस्य विषयः क इत्याशङ्क्याह—

अतोऽन्यापि ह्येकेषामुभयोः ॥ अतः-अग्निहोत्रादिसाधुकृत्यायाः अन्याऽपि विद्याधिगमात् पूर्वोत्तरयोः पुण्यकर्मणोरुभयोश्च कारीर्यादिका वृष्ट्यन्नाद्यर्थतया विदुषाऽनुष्ठिता, विद्योत्पत्तेः पूर्वं कृताऽनादिकालप्रवृत्ता च प्रबलकर्मान्तरप्रतिबद्धफला, साधुकृत्याऽस्तिहि ; अत एकेषां शाखिनां २"सुहृदस्साधुकृत्याम्" इति वचनं तद्विषयम् ; विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्य कर्मणः प्रबलकर्मप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

यदेव विद्ययेति हि ॥ उक्तं ह्युद्गीथविद्यायाः क्रतोः कर्मान्तरप्रतिबन्धाभावः फलमिति ; अतः प्रतिबद्धफलसाधुकृत्यस्यैव सुहृत्सङ्क्रमणम् ॥ १८ ॥

इति वेदान्तदीपे अग्निहोत्राद्यधिकरणम् ॥ १० ॥

---

( श्रीशारीरकमीमांसाभाष्ये इतरक्षपणाधिकरणम् ॥ )

---

## भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते॥४।१।१९॥

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ, ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशये ३"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने—

( सिद्धान्तः )

इति प्राप्त उच्यते—भोगेन तु-इति। तुशब्दः पक्षव्यावृत्त्यर्थः ; इतरे

---

१. बृ. ६-४-२२ ॥—२. ॥—३. छा. ६-१४-२ ॥

आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म सम्पद्यते ; ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्—तच्छरीरावसाने सम्पद्यते; अनेकशरीरभोग्यफले चेत्—तदवसाने सम्पद्यते, भोगेनैव क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । [1]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोः विमोक्ष उच्यते, देहावधिनियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्मानादिकालसंचितमनन्तं विद्यामाहात्म्याद्विनश्यति; विद्यारम्भोत्तरकालमनुष्ठितं च न श्लिष्यति ; तत्र पुण्यरूपं सर्वं विदुषस्सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥

इति श्रीशारीरकमीमांसाभाष्ये इतरक्षपणाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

वेदान्तसारे—भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ आरब्धकार्ययोः पुण्यपापयोर्यत्फलम्, तत् एकशरीरावसानमनेकशरीरावसानं वा भुक्त्वैव तदनन्तरं ब्रह्म प्राप्नोति ॥ १९ ॥

इति वेदान्तसारे इतरक्षपणाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरविरचिते वेदान्तसारे चतुर्थस्याध्यायस्य
प्रथमः पादः ॥ १ ॥

---

वेदान्तदीपे—भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ इतरे आरब्धकार्ये पुण्यपापे, किं विद्यायोनिशरीरावसान एव विनश्येते, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशयः । [1]"यावन्न विमोक्ष्ये

---

१. छा. ६-१४-२ ॥

अथ सम्पत्स्ये' इति सम्पत्तेश्शरीरविमोक्षविलम्बमात्रश्रुतेः तच्छरीरावसान इति पूर्वः पक्षः। राद्धान्तस्तु—प्रारब्धफलयोः कर्मणोः भोगेनैव क्षपयितव्यत्वाभिप्रायेण [1]"यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्युच्यते, न शरीरमात्रम्; कर्मविषयौ हि बन्धमोक्षौ; अतः प्रारब्धफले पुण्यपापे यावता शरीरेण समापनीये, तावता क्षपयित्वा अथ सम्पत्स्ये इत्यनियम एव। सूत्रं च व्याख्यातम्॥ १९॥

इति वेदान्तदीपे इतरक्षपणाधिकरणम्॥ ११॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य
प्रथमः पादः॥ १॥

---

१. छा. ६-१४-२॥



श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(चतुर्थाध्याये - द्वितीयः पादः - वागधिकरणम् ॥ १ ॥)

## वाङ्मनसि दर्शनाच्छब्दाच्च ।४।२।१॥

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावदुत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते [१]"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति । अत्र [१]"वाङ्मनसि सम्पद्यते" इति वाचो मनसि सम्पत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया, उत वाग्विषयेति विशये; वृत्तिमात्रविषयेति युक्तम् । कुतः? मनसो वाक्प्रकृतित्वाभावात्तत्र वाक्स्वरूपसम्पत्त्यसम्भवात् । वागादिवृत्तीनां मनोधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इति ॥

एवं प्राप्तेऽभिधीयते— वाङ्मनसि—इति । वाक्स्वरूपमेव मनसि सम्पद्यते । कुतः? दर्शनात्—दृश्यते हि वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिः । वृत्तिमात्रसम्पत्त्यापि तदुपपद्यत इति चेत्—तत्राह—शब्दाच्चेति । [१]"वाङ्मनसि सम्पद्यते" इति वाक्स्वरूपसम्पत्तावेव हि शब्दः; न वृत्तिमात्रसम्पत्तौ । नहि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते; येन वृत्तिमात्रमेव सम्पद्यत इत्युच्येत । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मन-

१. छा. ६-८-६ ॥

सि सम्पत्तिर्नोपपद्यत इति; तत् १ "वाङ्मनसि सम्पद्यते" इति वचनान्मनसा वाक्संयुज्यते; नतु तत्र लीयत इति परिहर्तव्यम् ॥ १ ॥

## अत एव सर्वाण्यनु । ४ । २ । २॥

यतो वाचो मनसा संयोगमात्रं सम्पत्तिः; न तु लयः; अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते, २ "तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २ ॥

इति श्रीशारीरकमीमांसाभाष्ये वागधिकरणम् ॥ १ ॥

---

वेदान्तसारे—वाङ्मनसि दर्शनाच्छब्दाच्च॥ १ "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते" इति शब्दात्; उत्क्रान्तौ मनसः प्रागेव वाच उपरतिदर्शनाच्च वाङ्मनसि ३संपद्यते ॥ १ ॥

अत एव सर्वाण्यनु ॥ अतः ४ "इन्द्रियैर्मनसि सम्पद्यमानैः" इति शब्दात्, उपरतिदर्शनाच्च, वाचमनु सर्वाणीन्द्रियाणि मनसि च संयुज्यन्ते॥ २॥

इति वेदान्तसारे वागधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे" इत्यादिकोत्क्रान्तिविषयाऽऽम्नायते : तत्र किं वागिन्द्रियं मनसि सम्पद्यते, उत वाग्वृत्तिमात्रमिति संशयः । वाचो मनःप्रकृतित्वाभावात् स्वरूपलयस्तत्र न संभवतीति वाग्वृत्तिमात्राभिप्रायमिति पूर्वः पक्षः । राद्धान्तस्तु अकारणे सम्पत्त्यभावस्य वाग्वृत्तावपि तुल्यत्वदर्शनात् १ ' वाङ्मनसि " इति वाक्स्वरूपस्यैव सम्पत्तिः । शब्दाच्च स्वरूपमेव सम्पद्यते १ "वाङ्मनसि सम्पद्यते" इति वाक्स्वरूपसम्पत्तावेव हि शब्दः; न वृत्तिमात्रसम्पत्तौ । अकारणे लयाभावात्सम्पत्तिशब्दस्संयोगाभिप्रायः । सूत्रं च व्याख्यातम् ॥ १ ॥

अत एव सर्वाण्यनु ॥ यतो वाचो मनसि संयोगमात्रमुच्यते ; न तु लयः ; अत एव तदानीं "५सर्वाणीन्द्रियाणि वाचमनु मनसि सम्पद्यन्ते"

---

१. छा. ६-८-६ ॥—२ ॥—३. संपद्यते-युज्यते इति क्वचित्पाठः ॥—४ ॥— ५ ॥

इति वचनं [१]"वाङ्मनसि सम्पद्यते" इति वचनवदुपपन्नम्, [२]"तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २ ॥

इति वेदान्तदीपे वागधिकरणम् ॥ १ ॥

(श्रीशारीरकमीमांसाभाष्ये मनोधिकरणम् ॥ २ ॥)

## तन्मनः प्राण उत्तरात् । ४ । २ । ३ ॥

तत्–सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते–प्राणेन संयुज्यते; न मनोवृत्तिमात्रम् । कुतः? उत्तरात्–[१]"मनः प्राणे" इति वाक्यात् ।

अधिकाशङ्का तु–[४]"अन्नमयं हि सोम्य मनः" इति वचनान्मनसोऽन्नप्रकृतित्वमवगम्यते; अन्नस्य च [३]"ता अन्नमसृजन्त" इत्यम्मयत्वं सिद्धम्, [३]"आपोमयः प्राणः" इति चाप्प्रकृतित्वं प्राणस्यावगम्यते, अतो मनः प्राणे सम्पद्यत इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनस्सम्पत्तिप्रतिपादने परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवति–इति ॥

परिहारस्तु [३]"अन्नमयं हि सोम्य मनः, आपोमयः प्राणः" इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते; न तत्प्रकृतित्वम्, आहङ्कारिकत्वान्मनसः, आकाशविकारत्वाच्च प्राणस्य । प्राणशब्देनापां लक्षणा च स्यात्–इति ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये मनोधिकरणम् ॥ २ ॥

वेदान्तसारे–तन्मनः प्राण उत्तरात् ॥ उत्तरात् [१]"मनः प्राणे' इति शब्दात् सर्वेन्द्रिययुक्तं मनः प्राणे संयुज्यते ॥ ३ ॥

इति वेदान्तसारे मनोधिकरणम् ॥ २ ॥

१. छा. ६-८-६ ॥—२ ॥—३. छा. ६-६-५ ॥—४. छा. ६-२-४ ॥

वेदान्तदीपे—तन्मनः प्राण उत्तरात् ॥ १"मनः प्राणे" इत्यत्र किं प्राणशब्देनाप उच्यन्ते, उत प्राण एवेति संशयः। प्राणस्य मनःप्रकृतित्वाभावात् २"अन्नमयं हि सोम्य मनः" इति मनसोऽन्नमयत्वश्रवणात्, अपां चान्नप्रकृतित्वेन, तत्संपत्तिरुपपद्यत इति प्राणशब्देनाप उच्यन्त इति पूर्वः पक्षः; २"आपोमयः प्राणः" इति ह्यम्मयत्वात्प्राणस्य प्राणशब्देनापो वक्तुं युज्यन्ते— इति। राद्धान्तस्तु—२"अन्नमयं हि सोम्य मनः आपोमयः प्राणः" इति मनःप्राणयोर्न तत्तत्प्रकृतित्वमुच्यते; अपि तु तदाप्यायनम्, आहङ्कारिकत्वान्मनसः, प्राणस्य चाकाशप्रकृतित्वात्। अतः वाङ्मनसीतिवत् तदुत्तरात् १"मनः प्राणे" इति शब्दात्, तत् सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते ॥ ३ ॥

इति वेदान्तदीपे मनोधिकरणम् ॥ २ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अध्यक्षाधिकरणम् ॥ ३ ॥ )

---

# सोऽध्यक्षे तदुपगमादिभ्यः । ४ । २ । ४ ॥

यथा १"वाङ्मनसि सम्पद्यते, मनःप्राणे" इतिवचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोस्सम्पत्तिः; तथा १"प्राणस्तेजसि" इति वचनात्तेजस्येव प्राणस्सम्पद्यते—

( सिद्धान्तः )

इति प्राप्त उच्यते—सोऽध्यक्षे—इति। सः-प्राणः, अध्यक्षे करणाधिपे जीवे सम्पद्यते। कुतः? तदुपगमादिभ्यः-प्राणस्य जीवोपगमस्तावच्छ्रूयते ३"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति; तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते ४"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति; प्रतिष्ठा च जीवेन सह श्रूयते ५"कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति। एवं जीवेन संयुज्य तेन

---

१. छा. ६-८-६ ॥—२. छा. ६-६-५ ॥—३. बृ. ६-३-३८ ॥—४. बृ. ६-४-२ ॥—५. प्रश्नो. ६-३ ॥

सह तेजस्सम्पत्तिरिह १"प्राणस्तेजसि" इत्युच्यते; यथा यमुनायाः गङ्गया संयुज्य सागरगमनेऽपि 'यमुना सागरं गच्छति' इति वचो न विरुध्यते, तद्वत् ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अध्यक्षाधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—सोऽध्यक्षे तदुपगमादिभ्यः॥ सः प्राणः अनन्तरं जीवेन संयुज्यते, २"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति प्राणस्य जीवोपगमादिश्रुतेः ॥ ४ ॥

इति वेदान्तसारे अध्यक्षाधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—सोऽध्यक्षे तदुपगमादिभ्यः॥ सः प्राणः किं तेजसि संयुज्यते, उत जीव इति संशयः। १ "प्राणस्तेजसि" इति वचनात्तेजस्येवेति पूर्वः पक्षः। राद्धान्तस्तु—उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः प्राणः करणाध्यक्षे जीवे संयुज्यते। एतदविरोधाय जीवे संयुज्य पश्चात्तेजस्संयोगं १"प्राणस्तेजसि" इति वदति। श्रूयन्ते हि प्राणस्य जीवोपगमादयः २"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" ३"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" ४"कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि" इत्यादिषु ॥ ४ ॥

इति वेदान्तदीपे अध्यक्षाधिकरणम् ॥ ३ ॥

---

(श्रीशारीरकमीमांसाभाष्ये भूताधिकरणम् ॥ ४ ॥)

---

# भूतेषु तच्छ्रुतेः । ४ । २ । ५ ॥

१"प्राणस्तेजसि" इति जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरुक्ता; सा सम्पत्तिः किं तेजोमात्रे, उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसि—

---

१. छा. ६-८-६ ॥—२. बृ. ६-३-३८ ॥—३. बृ. ६-४-२ ॥—४. प्रश्नो. ६-३ ॥

—•••( सिद्धान्तः )•••—

इति प्राप्त उच्यते—भूतेषु-इति । भूतेषु-सम्पद्यते । कुतः? तच्छ्रुतेः १ "पृथिवीमय आपोमयः···तेजोमयः" इति जीवस्य सञ्चरतस्सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण सम्पत्तावपि १ "पृथिवीमयः" इत्यादिका श्रुतिरुपपद्यते, अत आह—

## नैकस्मिन् दर्शयतो हि । ४ । २ । ६ ॥

नैकस्मिन्, एकैकस्य कार्याक्षमत्वात् । दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती २ "अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते । ३ "नानावीर्याः पृथग्भूताः ततस्ते संहतिं विना । नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति । अतः ४ "प्राणस्तेजसि" इति तेजश्शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते । अतो भूतेष्वेव सम्पत्तिः ॥ ६ ॥

इति श्रीशारीरकमीमांसाभाष्ये भूताधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—भूतेषु तच्छ्रुतेः ॥ ४ " प्राणस्तेजसि " इति भूतान्तरसंसृष्टं तेजोऽभिधीयत इति प्राणा भूतेषु संयुज्यन्ते ॥ ५ ॥

नैकस्मिन् दर्शयतो हि ॥ "४ तेजसि" इति न तेजोमात्रे, त्रिवृत्करणश्रुतिस्मृतिभ्यां केवलस्य तेजसोऽनवस्थानात् ॥ ६ ॥

इति वेदान्तसारे भूताधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—भूतेषु तच्छ्रुतेः ॥ नैकस्मिन् दर्शयतो हि ॥ ४ "प्रा-

---

१. बृ. ६-४-५ ॥— २. छां. ६-३-२, ३ ॥— ३. विष्णु. १-अं. २-अ. ५२-५३ ॥—४. छा. ६-८-६ ॥

णस्तेजसि" इति किं तेजोमात्रे प्राणस्संयुज्यते, उत भूतान्तरसंसृष्ट इति संशयः । १"तेजसि" इति वचनात्तेजोमात्र इति पूर्वः पक्षः। २"पृथिवीमयः" इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुतेः, त्रिवृत्करणश्रुतिस्मृतिभ्याञ्च तेजस एकस्य कार्याक्षमत्वाद्भूतान्तरसंसृष्ट इति राद्धान्तः । सूत्रद्वयं व्याख्यातम् ॥ ५ ॥ ६ ॥

इति वेदान्तदीपे भूताधिकरणम् ॥ ४ ॥

( श्रीशारीरकमीमांसाभाष्ये आसृत्युपक्रमाधिकरणम् ॥ )

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।४।२।७॥

इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना, उताविदुष एवेति चिन्तायाम्, अविदुष एवेति प्राप्तम्। कुतः? विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्यत्रैवामृतत्वं श्राव्यते-३"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥

( सिद्धान्तः)

एवं प्राप्तेऽभिधीयते-समानाचाऽसृत्युपक्रमात्—इति। विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिस्समाना । आसृत्युपक्रमात् - आगत्युपक्रमात्, नाडीप्रवेशात्प्रागित्यर्थः । विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते—४"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति।एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात्प्राग्विशेषाश्रवणात्समाना । तत्प्रवेशदशायां च विशेषः श्रूयते ५"तेन

१. छा. ६-८-६ ॥—२. बृ. ६-४-५॥—३. कठ. २-६-१४॥—४. कठ. २-६-१६ ॥ —५. बृ. ६-४-२ ॥

प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इति। [१]"शतं चैका च हृदयस्य" इत्यनया श्रुत्यैकार्थ्यान्मूर्ध्नो निष्क्रमणं विद्वद्विषयम्; इतरदविद्वद्विषयम्। यदुक्तं—विदुषोऽत्रैवामृतत्वं श्राव्यते—इति;तत्रोच्यते—अमृतत्वं चानुपोष्य—इति। चशब्दोऽवधारणे। अनुपोष्य—शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव, यदमृतत्वम्—उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते; तदुच्यते [२]"यदा सर्वे प्रमुच्यन्ते" इत्यादिकया श्रुत्येत्यर्थः। [२]"अत्र ब्रह्म समश्नुते" इति च उपासनवेलायां यो ब्रह्मानुभवः; तद्विषयमित्यभिप्रायः ॥ ७ ॥

## तदापीतेस्संसारव्यपदेशात् । ४ । २ । ८ ॥

अवश्यं च तत्—अमृतत्वमदग्धदेहसम्बन्धस्यैवेति विज्ञेयम्। कुतः? आपीतेः संसारव्यपदेशात्—अपीतिः—अप्ययः, ब्रह्मप्राप्तिः। सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते। आतदवस्थाप्राप्तेः संसारः—देहसम्बन्धलक्षणो हि व्यपदिश्यते [३]"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति [४]"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि" इति च ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । ४ । २ । ९ ॥

इतश्च विदुषोऽपि बन्धो नात्र दग्धः; यतस्सूक्ष्मं शरीरमनुवर्तते। कुत इदमवगम्यते; प्रमाणतस्तथोपलब्धेः—उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः[५]"तं प्रतिब्रूयात्"[६]"सत्यं ब्रूयात्" इति चन्द्रमसा संवादवचनेन शरीरसद्भावः। अतस्सूक्ष्मशरीरमनुवर्तते। अतश्च बन्धो न दग्धः ॥ ९ ॥

---

१. कठ. २-६-१६ ॥ —२. कठ. २-६-१४ ॥ —३. छा. ६-१४-२ ॥ —४. छा. ८-१३-१ ॥—५. कौ. १-२ ॥—६ ॥

## नोपमर्देनातः।४।२।१०॥

अतः [१] "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा।४।२।११॥

अस्य—सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मा स्थूले शरीरे क्वाचित्क उपलभ्यते। नच स्थूलस्यैव शरीरस्यायमूष्मा, अन्यत्रानुपलब्धेः। ततश्चोष्मणः क्वचिदुपलब्धिर्विदुषस्सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते। तस्माद्विदुषोऽप्यासृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११ ॥

पुनरपि विदुष उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते—

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम्।४।२।१२॥

यदुक्तं विदुषोऽप्युत्क्रान्तिस्समानेति; तन्नोपपद्यते, विदुष उत्क्रान्तिप्रतिषेधात्। तथाहि-[२]"स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्वपक्रामति" इत्युपक्रम्य [२]"तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यविदुष उत्क्रान्तिप्रकारमभिधाय [३] "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इति देहान्तरपरिग्रहं चाभिधाय [४]"प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमानः" इत्यविद्वद्विषयं परिसमाप्य [४]"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिः प्रतिषिध्यते। तथा पू-

१. कठ. २-६-१४ ॥—२. बृ. ६-४-१, २॥—३. बृ. ६-४-४ ॥—४. बृ. ६-४-६॥

वेत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते [१]"अप पुनर्मृत्युं जयति" इति विद्वांसं प्रस्तुत्य [१]" याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो न"इति पृष्टः"[१]"नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातो मृतः शेते" इति। अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—तन्न,शारीरात्-प्रत्यगात्मनः प्राणानामुत्क्रान्तिरत्र प्रतिषिध्यते; न शरीरात् [२]"न तस्य प्राणा उत्क्रामन्ति" इत्यत्र तच्छब्देन[२]"अथाकामयमानः" इति प्रकृतश्शारीर एव परामृश्यते; नाश्रुतं शरीरम्। [२]"तस्य" इति षष्ठ्या प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः;नतूत्क्रान्त्यपादानत्वेन;उत्क्रान्त्यपादानं तु शरीरमेवेति चेत्—न,अपादानापेक्षायामश्रुताच्छरीरात्सम्बन्धितया श्रुतस्यात्मन एव सन्निहितत्वेनापादानतयापि ग्राह्यत्वात्। किञ्च प्राणानां जीवसम्बन्धितयैव प्रज्ञातानां तत्सम्बन्धकथने प्रयोजनाभावात्सम्बन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते। यथा 'नटस्य शृणोति'इति। नचात्र विवदितव्यं—स्पष्टो ह्येकेषां—माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति [२]"योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति " इति। शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तन्निषेधो नोपपद्यत इति चेत्-न,[३]"तस्य तावदेव चिरम्"इति विदुषश्शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद्विदुषो वियोगः प्रसज्यते; ततश्च देवयानेन पथा ब्रह्मसम्पत्तिर्नोपपद्यत इति।[२]" न तस्य प्राणा उत्क्रामन्ति " देवयानेन पथा ब्रह्मप्राप्तेः प्राग्जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते। आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः; तदा अयमेव परिहारः; स त्वविद्वद्विषयः, तत्र प्रश्नप्रतिवचनयोः ब्रह्मविद्याप्रसङ्गादर्शनात्; तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावः, अपामग्न्य-

१. बृ. ५-२-१०, ११॥—२. बृ. ६-४-६॥—३. छा. ६-१४-२॥

भत्वं, म्रियमाणस्य जीवस्य प्राणापरित्यागः, मृतस्य नामवाच्यकीर्त्यनुवृत्तिः, तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः। तत्र च १"अपं पुनर्मृत्युं जयति" इति अपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते। अतो नात्र विदुषः प्रसङ्गः। अविदुषस्तु प्राणानुत्क्रान्तिवचनं—स्थूलदेहवत्प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्ति—इति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥

## स्मर्यते च । ४ । २ । १३ ॥

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः २"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥

इति श्रीशारीरकमीमांसाभाष्ये आसृत्युपक्रमाधिकरणम्॥ ५ ॥

---

वेदान्तसारे—समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ अर्चिरादिगत्युपक्रमात्प्रागुत्क्रान्तिः विद्वदविदुषोस्समाना, विदुषोऽर्चिरादिगत्या ब्रह्मप्राप्तिश्रुतेः। "३ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति अत्रैव अमृतत्वब्रह्मप्राप्तिवचनं शरीरेन्द्रियादिसम्बन्धमदग्ध्वैवोपासनारम्भाभिप्रायमित्युपगन्तव्यमित्यर्थः ॥ ७ ॥

तदापीतेस्संसारव्यपदेशात् ॥ अर्चिरादिगमनेन ब्रह्मप्राप्तेः प्राक् शारीरसम्बन्धव्यपदेशात्तदमृतत्वादिवचनमुक्तप्रकारमेव ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते ; अन्यथा गत्यनुपपत्तेः। न केवलं गत्यनुपपत्तिमात्रं सूक्ष्मशरीरवत्त्वे प्रमाणम्, चन्द्रमसा संवादादिप्रमाणान्तरतश्च सूक्ष्मशरीरवत्त्वोपलब्धेः—४"तं प्रति ब्रूयात्"५"सत्यं ब्रूयात्" इति ॥ ९ ॥

नोपमर्देनातः ॥ अतः-उक्ताद्धेतोः, ३"अथ मर्त्योऽमृतो भवति" इत्याद्यमृतत्ववचनं न देहसम्बन्धोपमर्देन ॥ १० ॥

---

१. बृ.५-२-१०॥—२. याज्ञवल्क्य. अध्यात्मप्र. १६७-श्लो॥—३. कठ. २-६-१४॥—४. कौषी. १-२ ॥

**अस्यैव चोपपत्तेरूष्मा ॥** अस्य - सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न तदुपमर्दनं । उपलभ्यते ह्युत्क्रामतो विदुषस्सूक्ष्मदेहगुण ऊष्मा ; अन्यत्रानुपलम्भान्न स्थूलगुणः ॥ ११ ॥

**प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥** १"अथाकामयमानो न तस्य प्राणा उत्क्रामन्ति" इति विदुष उत्क्रान्तिप्रतिषेधादत्रैव साक्षाद्ब्रह्मप्राप्तिरिति चेत्—नैतत्; विदुष उत्क्रममाणस्यार्चिरादिकया गमनाय प्राणा न विश्लिष्यन्ते इति ह्युच्यते १"न तस्य प्राणा उत्क्रामन्ति" इति । अयमर्थो माध्यन्दिनानां पाठे स्पष्टोऽभिधीयते १"योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात्प्राणा उत्क्रामन्ति" इति ॥ १२ ॥

**स्मर्यते च ॥** विदुषोऽपि मूर्धन्यनाड्या गमनं स्मर्यते च २"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥

इति वेदान्तसारे आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

---

**वेदान्तदीपे—समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥** इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना, उताविदुष एवेति संशयः। विदुषोऽत्रैवामृतत्वप्राप्तिश्रुतेरविदुष एवेति पूर्वः पक्षः; श्रूयते हि विदुषोऽत्रैव ब्रह्मप्राप्तिः- ३"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति । राद्धान्तस्तु—विदुषोऽर्चिरादिकयैव ब्रह्मप्राप्तिः ; अर्चिरादिगत्युपक्रमात्प्रागियमुत्क्रान्तिस्समाना । गतिश्च मूर्धन्यनाड्या ४"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः । ३"यदा सर्वे प्रमुच्यन्ते" इत्यनेन गतिश्रुत्यविरोधायामृतत्वसाधनभूतोपासननिष्पत्तिरुच्यते, हृदि स्थिताः कामा यदा प्रमुच्यन्ते, तदैवोपासनारम्भान्मर्त्योऽमृतो भवतीति । अत्र - कामविमोकपूर्वकोपासने स्थितोऽर्चिरादिकया गत्वा ब्रह्म समश्नुते इत्यर्थः । सूत्रार्थस्तु—सृतिः-गतिः, आगत्युपक्रमादुत्क्रान्तिर्विदुषोऽपि समाना, विदुषोऽर्चिरादिगतिश्रुतेः। ३"अथ मर्त्योऽमृतो भवति" इत्युच्यमानममृतत्वमनुपोष्य च-अदग्ध्वैव शरीरेन्द्रियादिसम्बन्धम् उपासनारम्भपरिकररूपमित्यर्थः ॥ ७ ॥

---

१. बृ. ६-४-६॥—२. याज्ञवल्क्य, अध्यात्मप्र. १६७-श्लो॥—३. कठ. २-६-१४॥ —४. कठ. २-६-१६ ॥

**तदापीतेस्संसारव्यपदेशात् ॥** तत् अमृतत्वम् , उक्तप्रकारमेव। कुतः? आपीतेस्संसारव्यपदेशात्—अपीतिः-ब्रह्मप्राप्तिः ; अर्चिरादिकया गत्या देश-विशेषं गत्वा यावद्ब्रह्म प्राप्यते ; तावत्संसारः शरीरसम्बन्धो हि व्यपदिश्यते॥

गतिव्यपदेशादेव शरीरादुत्क्रान्तस्य कथं शरीरसम्बन्ध इत्यत्राह—

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥** सूक्ष्मशरीरमनुवर्तते, गतिव्यपदेशात् । न केवलं गतिव्यपदेशादेव, प्रमाणान्तरतश्च तथा सूक्ष्मशरीरवत्त्वस्योपलब्धेश्च । विदुषोऽर्चिरादिकया गत्या गच्छतश्चन्द्रमसा संवादोऽयमुपदिश्यते [१] "तं प्रति ब्रूयात्" [२] "सत्यं ब्रूयात्" इत्यादिना ॥ ९ ॥

**नोपमर्देनातः ॥** अतः उक्ताद्धेतुकलापात् , [३] "अथ मर्त्योऽमृतो भवति" इतिवचनं न देहसम्बन्धोपमर्देनामृतत्वं वदति; अपितूक्तमेवोपासनारम्भरूपं वदतीत्यर्थः ॥ १० ॥

**अस्यैव चोपपत्तेरूष्मा ॥** अस्य सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न देहसम्बन्धोपमर्देन । उपलभ्यते ह्युत्क्रममाणस्य विदुषः क्वचिदूष्मा सूक्ष्मदेहगुणः, नचायं स्थूलदेहगुणः, अन्यत्रानुपलब्धेः । अतो विद्वान् सूक्ष्मशरीरेणोत्क्रामति ॥ ११ ॥

**प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥** [४] "स एतास्तेजोमात्राः" इत्यारभ्य [४] "इति तु कामयमानः" इत्यन्तेनाविदुषः उत्क्रान्तिप्रकारं लोकान्तरगमनं पुनरावृत्तिं चाभिधाय, [५] "अथाकामयमानः" इत्यादिना [५] "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिप्रतिषेधादुक्तप्रकारो नोपपद्यत इति चेत्—तन्न शारीरात्प्राणानामविश्लेषोऽनेनोच्यते । तस्य अकामयमानस्य विदुषश्शारीरस्य, प्राणास्स्वस्मान्नोत्क्रामन्ति । देवयानेन गमनाय सहैव तिष्ठन्ति । अयमर्थः स्पष्टो ह्येकेषां - माध्यन्दिनशाखिनां पाठे [४] "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति" इति ॥

**स्मर्यते च ॥** स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः [६] "ऊर्ध्वमेकस्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥

इति वेदान्तदीपे आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

---

१. कौषी. १-२ ॥— २ ॥—३. कठ. २-६-१४ ॥—४. बृ. ६-४-१॥—५. बृ ६-४-६ ॥—६. याज्ञवल्क्य. अध्यात्मप्र. १६७-श्लो ॥

—••—◆—( श्रीशारीरकमीमांसाभाष्ये परससम्पत्त्यधिकरणम् ॥ ६ ॥ )—◆—••—

## तानि परे तथाह्याह । ४ । २ । १४ ॥

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तम्; सैषा सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम्; तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति, उत परमात्मनि सम्पद्यन्त इति विशये मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यदर्शनात्, तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्ति—

—••—◆—( सिद्धान्तः )—◆—••—

इति प्राप्त उच्यते—तानि परे—इति । तानि परस्मिन्नात्मनि सम्पद्यन्ते; कुतः? तथाह्याह श्रुतिः—[1]"तेजः परस्यां देवतायाम्" इति । यथाह श्रुतिस्तदनुगुणं कार्यं कल्प्यमित्यर्थः । सुषुप्तिप्रलययोर्यथा परमात्मसम्पत्त्या सुखदुःखोपभोगायासविश्रमः; तद्वदिहापि ॥ १४ ॥

इति श्रीशारीरकमीमांसाभाष्ये परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

वेदान्तसारे—तानि परे तथाह्याह॥ [1]"तेजः परस्यां देवतायाम्"इति श्रुतेः परदेवतासम्पत्तिरुत्क्रममाणस्य विश्रमस्थानमिति तानि भूतानि जीवसंयुक्तानि परदेवतायां संपद्यन्ते ॥ १४ ॥

इति वेदान्तसारे परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

वेदान्तदीपे—तानि परे तथाह्याह॥ [1]"प्राणस्तेजसि" इति तेजश्शब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि किं परस्यां देवतायां सम्पद्यन्ते, उत यथाकर्म यथाविद्यं च गच्छन्तीति संशयः । तदानीं सुखदुःखोपभोगाद्यभा-

---

१. छा. ६-८-६ ॥

वेन परसम्पत्तौ प्रयोजनाभावात् यथाकर्म यथाविद्यमिति पूर्वः पक्षः । सर्वस्य परदेवताकार्यत्वेन तदात्मकत्वाद्गन्तव्यस्थानमिदं १"परस्यां देवतायाम्" इत्युच्यते । राद्धान्तस्तु—तानि परे परस्मिन्ब्रह्मणि सम्पद्यन्ते ; १"तेजः परस्यां देवतायाम्" इति ह्याह श्रुतिः।यथाश्रुति विश्रमस्थानत्वेन कार्यं परिकल्प्यमित्यर्थः। सूत्रं च व्याख्यातम् ॥ १४ ॥

इति वेदान्तदीपे परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अविभागाधिकरणम् ॥ ७ ॥ )

## अविभोगो वचनात् । ४ । २ । १५ ॥

सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत्कारणापत्तिरूपा, उत १"वाङ्मनसि" इत्यादिवदविभागरूपेति चिन्तायां—परमात्मनस्सर्वेषां योनिभूतत्वात्कारणापत्तिरूपा—

( सिद्धान्तः )

इति प्राप्त उच्यते—अविभागः—इति।अपृथग्भावः-पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः। कुतः ? वचनात् १"तेजः परस्यां देवतायाम्"इत्यत्रापि १"वाङ्मनसि सम्पद्यते" इत्यतस्सम्पद्यत इति वचनस्यानुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्, अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावात्, उत्क्रान्तिवेलयां कारणापत्तिप्रयोजनाभावात् पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्च ॥ १५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अविभागाधिकरणम् ॥ ७ ॥

---

वेदान्तसारे—अविभोगो वचनात्॥परदेवतासम्पत्तिवचनमविभागमात्रपरम्, "१वाङ्मनसि सम्पद्यते" इति सम्पत्तिपदस्यैवात्रानुषक्तस्यार्थान्तरपरत्वे प्रमाणाभावात् ; मनःप्रभृतिषु हि प्रलयासम्भवादविभागमात्रपरम्॥

इति वेदान्तसारे अविभागाधिकरणम् ॥ ७ ॥

---

१. छा. ६-८-६ ॥

वेदान्तदीपे—अविभागो वचनात् ॥ सेयं परमात्मनि सम्पत्तिः किं प्राकृतप्रलयवत्कारणापत्तिरूपा, उत मनःप्रभृतिसम्पत्तिवदविश्लेषमात्रमिति संशयः। परमात्मनः कारणत्वात्, तत्सम्पत्तिवचनाच्च कारणापत्तिरेवेति पूर्वः पक्षः। राद्धान्तस्तु—[१]"वाङ्मनसि सम्पद्यते" इति श्रुतस्यैव सम्पत्तिवचनस्य सर्वत्रानुषङ्गादत्रानुषक्तस्य चाभिधानवैरूप्यासम्भवादत्राप्यविभागः—अविश्लेष एवोच्यते। सूत्रमपि व्याख्यातम् ॥ १५ ॥

इति वेदान्तदीपे अविभागाधिकरणम् ॥ ७ ॥

—••—( श्रीशारीरकमीमांसाभाष्ये तदोकोधिकरणम् ॥ ८ ॥ )—••—

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया । ४ । २ । १६ ॥

एवं गत्युपक्रमावधि विद्वदविदुषोस्समानाकार उत्क्रान्तिप्रकार उक्तः; इदानीं विदुषो विशेष उच्यते। तत्रेदमाम्नायते—[२]"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति। अनया नाडीनां शताधिकया मूर्धन्यनाड्यैव विदुषो गमनम्, अन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते, नेति संशयः। किं युक्तम्? नियमो नोपपद्यत इति। कुतः? नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात्। [२]"तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति ॥

१. छा. ६-८-६ ॥—२. कठ. २-६-१६ ॥

( सिद्धान्तः )

एवं प्राप्ते प्रचक्ष्महे—शताधिकया—इति । विद्वान् शताधिकया मूर्धन्ययैव नाड्योत्क्रामति। नचास्याः विदुषो दुर्विवेचत्वम्; विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद्विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति; ततश्च तदोकः-तस्य-जीवस्य स्थानं हृदयम्, अग्रज्वलनं भवति अग्रे ज्वलनं प्रकाशनं यस्य, तदिदमग्रज्वलनम्। परमपुरुषप्रसादात्प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ॥ १६ ॥

इति श्रीशारीरकमीमांसाभाष्ये तदोकोधिकरणम् ॥ ८ ॥

---

वेदान्तसारे—तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया॥ हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात्, तदङ्गगतिचिन्तनेन च प्रीतपरमपुरुषानुगृहीतः, तदनुग्रहतः प्रकाशिततद्द्वारो जीवः शताधिकया मूर्धन्यनाड्या गच्छति; तदनुग्रहादेव जीवस्थानमग्रे प्रकाशवद्भवति । हार्दः-परमात्मा परमपुरुषः; १"तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" २"सर्वस्य चाहं हृदि सन्निविष्टः" इति हि श्रुतिस्मृती ॥ १६ ॥

इति वेदान्तसारे तदोकोधिकरणम् ॥ ८ ॥

---

वेदान्तदीपे—तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ ३ "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति शताधिकया मूर्धन्यया नाड्या विदुषो गमनमिति नियमस्सम्भवति, नेति संशयः । नाडीनामतिसूक्ष्मत्वेन दुर्विवेचत्वान्नियमो न सम्भवतीति यादृच्छिकीं तया गतिमनुवदतीदं वचनमिति पूर्वः पक्षः। राद्धान्तस्तु—परमपुरुषाराधनभूतया विद्यया तदङ्गभूतगतिचिन्तनेन च प्रीतेन

१. तै. ना. ११-अनु ॥—२. गी. १५-१५ ॥—३. कठ. २-६-१६ ॥

परमपुरुषेणानुगृहीतो जीवस्तत्प्रसादप्रकाशितद्वारस्तयैव मूर्धन्यया नाड्या गच्छति—इति ॥

सूत्रार्थस्तु—हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात्, तच्छेषगत्यनुस्मृतियोगाच्च प्रीतहार्दानुगृहीतो भवति जीवः ; ततः तदोकः-जीवस्य स्थानं हृदयम्, अग्रज्वलनम्-प्रकाशिताग्रं भवति;एवं परमपुरुषप्रकाशितद्वारः शताधिकया गच्छति; [१]"तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" [२]"सर्वस्य चाहं हृदि सन्निविष्टः" इति हार्दः परमात्मा ॥ १६ ॥

इति वेदान्तदीपे तदोकोधिकरणम् ॥ ८ ॥

---

(श्रीशारीरकमीमांसाभाष्ये रश्म्यनुसाराधिकरणम् ॥९॥)

---

## रश्म्यनुसारी । ४ । २ । १७ ॥

विदुषो हृदयाच्छताधिकया मूर्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते–[३]"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमस्सम्भवति, नेति चिन्तायां–निशि मृतस्य विदुषो रश्म्यनुसारासम्भवादनियमः । वचनन्तु पक्षप्राप्तविषयम्—

(सिद्धान्तः)

इति प्राप्त उच्यते–रश्म्यनुसारी—इति । रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति; कुतः? [३]"अथैतैरेव रश्मिभिः"इत्यवधारणात्; पाक्षिकत्वे ह्येवकारोऽनर्थकस्स्यात् । यदुक्तं निशि मृतस्य रश्म्यसम्भवाद्रश्मीननुसृत्य गमनं नोपपद्यत इति ; तन्न, निश्यपि सूर्यरश्म्यनुसारस्सम्भवति; लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः ; हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः; श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः–[४]"तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं

---

१. तै. ना. ११-अनु ॥—२. गी. १५-१५ ॥—३. छा. ८-६-५॥—४. छा.८-६-२॥

चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः"इति। तस्मान्निश्यपि रश्मिसम्भवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव॥ १७ ॥

इति श्रीशारीरकमीमांसाभाष्ये रश्म्यनुसाराधिकरणम् ॥ ९ ॥

---

वेदान्तसारे—रश्म्यनुसारी ॥ १ "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति श्रुतेः विद्वान् रश्म्यनुसार्येव गच्छति; निश्यपि रश्मयस्सम्भवन्त्येव,निदाघादावुष्मोपलब्धेः; हेमन्तेऽनुपलब्धिस्तु हिमाभिभवकृता ॥ १७ ॥

इति वेदान्तसारे रश्म्यनुसाराधिकरणम् ॥ ९ ॥

---

वेदान्तदीपे—रश्म्यनुसारी ॥ १"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति विद्वान् रश्म्यनुसारी गच्छतीति नियमस्सम्भवति, नेति संशयः। निशि मृतस्य विदुषः आदित्यरश्म्यनुसारासम्भवादनियम इति पूर्वः पक्षः। वचनं तु पक्षप्राप्तमनुवदति।राद्धान्तस्तु—वचनस्य पक्षप्राप्त्यनुवादित्वे "अथैतैरेव" इत्यवधारणविरोधः। न च निशि रश्मयो न सन्तीति। निश्यपि निदाघसमये ऊष्मोपलब्धेः सूक्ष्मास्सन्त्येवेति रश्म्यनुसार्येव गच्छति। हेमन्तेऽनुपलब्धिः दुर्दिन इव हिमाभिभवात् ॥ १७ ॥

इति वेदान्तदीपे रश्म्यनुसाराधिकरणम् ॥ ९ ॥

---

( श्रीशारीरकमीमांसाभाष्ये निशाधिकरणम् ॥ १० ॥ )

# निशि :

## यति च । ४ । २ । १८ ॥

इदमिदानीं चिन्त्यते—विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, ने-

---

१. छा. ८-६-५ ॥

ति । यद्यपि निशायां सूर्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्निशायामपि सम्भवति; तथापि निशामरणस्य शास्त्रेषु गर्हितत्वात्परमपुरुषार्थलक्षण-ब्रह्मप्राप्तिर्निशामृतस्य न सम्भवति । शास्त्रेषु दिवामरणं प्रशस्तम्, विपरीतं निशामरणं–[१]"दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्"इति। दिवामरणनिशामरणयोः प्रशस्तत्व-विपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम् । अतो निशि मरणमधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेत्–तन्न, विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात्। एतदुक्तं भवति–अनारब्धकार्याणामधोगति हेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशादुत्तरेषां चाश्लेषात्प्रारब्धकार्यस्य च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशामृतस्यापि ब्रह्मप्राप्तिस्सिद्धैव । दर्शयति च श्रुतिः [२]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये"इति। [१]"दिवा च शुक्लपक्षश्च" इत्यादिवचनमविद्वद्विषयम् ॥

इति श्रीशारीरकमीमांसाभाष्ये निशाधिकरणम् ॥ १० ॥

---

वेदान्तसारे—निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ [१]"दिवा च शुक्लपक्षश्च" इत्यारभ्य [१]"विपरीतन्तु गर्हितम्" इति निशामरणनिन्दनात्, निशि मृतस्य न ब्रह्मप्राप्तिरिति चेत्—न, कर्मसंबन्धस्य यावद्देहभावित्वात्, प्रारब्धस्य यावच्चरमदेहावसानभावित्वाच्च, ब्रह्मप्राप्तिविघ्नहेत्वभावात्। दर्शयति च [२]"तस्य तादेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति । निशानिन्दा इतरपुरुषार्थविषया ॥ १८ ॥

इति वेदान्तसारे निशाधिकरणम् ॥ १० ॥

---

वेदान्तदीपे—निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति संशयः । [१]"दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति

१ ॥—२. छा. ६-१४-२ ॥

निशामरणस्य गर्हितत्वेन अधोगतिहेतुत्वान्न ब्रह्मप्राप्तिस्सम्भवतीति पूर्वः पक्षः। राद्धान्तस्तु—विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशश्रुतेरश्लिष्टविनष्टत्वात्, प्रारब्धस्यापि कर्मणः चरमदेहावधित्वाच्च, बन्धहेत्वभावान्निशि मृतस्यापि ब्रह्मप्राप्तिरस्त्येव—इति। अविद्वद्विषया निशामरणनिन्दा॥

सूत्रार्थस्तु—निशामरणनिन्दया निशि मृतस्य न ब्रह्मप्राप्तिरिति चेत्-तन्न-सम्बन्धस्य यावद्देहभावित्वात् अनारब्धकार्यकर्मसम्बन्धस्य विद्यया विनष्टत्वात् प्रारब्धकार्यकर्मसम्बन्धस्यापि यावच्चरमदेहभावित्वाद्बन्धहेत्वभावेन ब्रह्मप्राप्तिरस्त्येवेत्यर्थः। तदेतच्छ्रुतिश्च दर्शयति [1]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति॥ १८॥

इति वेदान्तदीपे निशाधिकरणम्॥ १०॥

---

(श्रीशारीरकमीमांसाभाष्ये दक्षिणायनाधिकरणम्॥११॥)

---

## अतश्चायनेऽपि दक्षिणे।४।२।१९॥

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिस्सिद्धा॥

अधिका शङ्का तु [2]"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति" इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तानां च [3]"तेषां यदा तत्पर्यवैत्यथैतमेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनाद्दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न सम्भवति—इति॥

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रं प्राप्तानामेव पुनरावृत्तिः, विदुषस्तु चन्द्रं प्राप्तस्यापि[2]"तस्माद्ब्रह्मणो महिमानमाप्नोति"इति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः ब्रह्म प्रपित्सतो विश्रमहेतुमात्रमिति गम्यते; वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावात् विदु-

---

१. छा. ६-१४-२॥—२. तै. ना. ५२-अनु॥—३. छा. ५-१०-५॥

षश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या।भीष्मादीनां योगप्रभावात् स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचारः ॥

ननु च विदुषो मुमूर्षून् प्रति पुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते [1]"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" इति; तत्राह—

## योगिनः प्रति स्मर्यते स्मार्ते चैते।४।२।२०॥

नात्र मुमूर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते; अपितु योगिनः-योगनिष्ठान् प्रति स्मार्ते- स्मृतिविषयभूते-स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते-योगाङ्गतयाऽनुदिनं स्मर्तुम्। तथा ह्युपसंहारः [1]"नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति। [1]"अग्निर्ज्योतिः" [1]"धूमो रात्रिः" इति च देवयानपितृयाणे प्रत्यभिज्ञायेते। उपक्रमे च [1]"यत्र काले तु"इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः, अग्न्यादेः कालत्वासम्भवात्। अतः [2]"तेऽर्चिषमभिसम्भवन्ति" इति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान् प्रति विधीयते, न मुमूर्षून् प्रति मरणकालविशेषः ॥ २० ॥

इति श्रीशारीरकमीमांसाभाष्ये दक्षिणायनाधिकरणम् ॥११ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

१. गी. ८-२३,२४,२५,२६,२७ ॥—२. बृ. ८-२-१५ ॥

वेदान्तसारे—अतश्चायनेऽपि दक्षिणे॥ अतः—बन्धहेत्वभावादेव दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ १ "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इति न मरणकालस्स्मर्यते; अपितु योगिनो विद्यानिष्ठान्प्रति अर्चिरादिका तद्विपरीताचेति एते-स्मार्ते-स्मृतिविषयभूते, स्मर्येते-१"नैते सृती पार्थ जानन्योगी मुह्यति कश्चन" इतिवचनात् ॥ २० ॥

इति वेदान्तसारे दक्षिणायनाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

वेदान्तदीपे—अतश्चायनेऽपि दक्षिणे ॥ दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति, नेति संशयः । २"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति" इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात्, चन्द्रं प्राप्तानाम् ३"अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति वचनाच्च, दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्न सम्भवतीति पूर्वः पक्षः। राद्धान्तस्तु-पूर्वोक्ताद्बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि पुनरावृत्तिर्न सम्भवति । चन्द्रसायुज्यवचनं विदुषो ब्रह्म प्रेप्सोर्विश्रमस्थानमात्रविषयम्; आवृत्तिवचनंत्वविदुषामेव। सूत्रार्थस्तु—यतो हेतोर्निशि मृतस्यापि ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावाद्दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

१"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इति मरणकालविशेषः स्मर्यत इति चेत्, तत्राह—

योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ योगिनः - ब्रह्मविद्यानिष्ठान्प्रति एते-देवयानपितृयाणगती, स्मार्ते स्मर्येते स्मार्ते—स्मृतिविषयभूते अहरहस्स्मर्तव्ये स्मर्येते इत्यर्थः— १"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः"

---

१. गी. ८-२३-२७ ॥—२. तै. ना. ५२-अनु ॥—३. छा. ५-१०-५ ॥

इत्यादिना १"नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इत्यन्तेन । न मुमूर्षून् प्रति कालविशेषोपादानं स्मर्यते । आतिवाहिकगणस्य कालाभिमानिदेवताविशेषभूयस्त्वेन १"यत्र काले" इत्युच्यते ॥ २० ॥

इति वेदान्तदीपे दक्षिणायनाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

१. गी. ८-२७-२३ ॥



श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(चतुर्थाध्याये - तृतीयः पादः- अर्चिराद्यधिकरणम् ॥१॥)

## अर्चिरादिना तत्प्रथितेः । ४ । ३ । १ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद्गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते। तत्र श्रुतिषु मार्गप्रकाराः बहुधा आम्नायन्ते; छान्दोग्ये तावत् [1]"यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते [2]"अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न अर्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्म पथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। तथाऽत्रैवाष्टमे [3]"अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति। कौषीतकिनश्च देव-

---

१. छा. ४-१४-३ ॥—२. छा. ४-१५-५,६ ॥—३. छा. ८-६-५ ॥

यानमार्गमन्यथाऽधीयते [१]"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति। तथा बृहदारण्यके [२]"य एवमेतद्विदुर्येचेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न अपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवस्स एत्य ब्रह्मलोकान् गमयति" इति। तत्रैव पुनरन्यथा [३]"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा आडम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्" इत्यादि। तत्र संशयः–किमर्चिरादिरेक एव मार्ग आभिश्श्रुतिभिः प्रतिपाद्यत इति, तेनैव ब्रह्म गच्छति विद्वान्, उत तस्मादन्येऽन्यत्र मार्गा इति, तैर्वाऽनेन वेत्यनियमः—इति। किं युक्तम्? अनियम इति। कुतः? अनेकरूपत्वान्नैरपेक्ष्याच्चेति॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते–अर्चिरादिना–इति। अर्चिरादिरेक एव मार्गस्सर्वत्र प्रतिपाद्यते। अतोऽर्चिरादिनैव गच्छति। कुतः? तत्प्रथितेः—तस्यैव सर्वत्र प्रथितेः। प्रथितिः–प्रसिद्धिः, तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः। प्रत्यभिज्ञानात्स एव मार्गस्सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते। छान्दोग्ये तावदुपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते; वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिः अल्पान्तर आम्नायते; अतस्त-

१. कौ. १-अ. ३॥—२. बृ. ८-२-१५॥—३. बृ. ७-१०-१॥

त्रापि स एवेति प्रतीयते । अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥ १ ॥

इति श्रीशारीरकमीमांसाभाष्ये अर्चिराद्यधिकरणम् ॥ १ ॥

---

वेदान्तसारे—अर्चिरादिना तत्प्रथितेः ॥ अर्चिरादिनैकेन विद्वान् गच्छति, सर्वासु श्रुतिषु तच्चिह्नैस्तत्प्रत्यभिज्ञानात् ॥ १ ॥

इति वेदान्तसारे अर्चिराद्यधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—अर्चिरादिना तत्प्रथितेः ॥ किं विद्वानर्चिरादिनैकेन मार्गेण गच्छति, उत तेन वाऽन्येन वेत्यनियम इति संशयः। तदर्थं परीक्ष्यते—किं सर्वासु श्रुतिष्वर्चिरादिरेक एव मार्ग आम्नायते, उत तत्रतत्रान्य इति। यदाऽर्चिरादिरेक एव सर्वत्रोक्तः; तदा तेनैव गच्छति। यदा तत्रतत्राम्नाता अन्ये, तदाऽन्यैर्वाऽनेन वेत्यनियम इति। छान्दोग्यवाजसनेयकादिषु नानाविधाः गतिप्रकाराश्श्रूयन्ते। छान्दोग्ये[1] "यथा पुष्करपलाश आपो न श्लिष्यन्ते" इत्युपक्रम्य,[2] "सर्वाणि ...नयति"[2] "सर्वेषु लोकेषु भाति य एवं वेद"[2] "अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदुच नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। बृहदारण्यके[3] "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवस्स एत्य ब्रह्मलोकान्गमयति" इति। तत्रैवान्यथा[4] "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथाऽऽडम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्" इत्यादिषु। तेषां ब्रह्मप्राप्तौ नैरपेक्ष्यश्रवणात्तैर्वाऽर्चिरादिना वेति विकल्प इति पूर्वः पक्षः। राद्धान्तस्तु—सर्वत्रार्चिराद्यन्तर्भूतादित्यादीनां दर्शनात्स एवेति प्रत्यभिज्ञानात्, अन्यत्रोक्तानामन्यत्रोपसंहाराच्च, सर्वत्रार्चिरादिरेक एव मार्ग इति तेनैव गच्छति विद्वान्। सूत्रार्थस्तु—अर्चिरादिनैव ग-

---

१. छा. ४-१४-३॥-२. छा. ४-१५-३,४,५॥—३. बृ. ८-२-१५॥—४. बृ. ७-१०-१॥

च्छति विद्वान् । कुतः? तत्प्रथितेः; प्रथितिः-प्रसिद्धिः ; सर्वत्र तत्प्रत्यभिज्ञानादित्यर्थः ॥ १ ॥

इति वेदान्तदीपे अर्चिराद्यधिकरणम् ॥ १ ॥

( श्रीशारीरकमीमांसाभाष्ये वाय्वधिकरणम् ॥ २ ॥ )

## वायुमब्दादविशेषविशेषाभ्याम् । ४ । ३ । २ ॥

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम् ; तत्रार्चिरादिके मार्गे छन्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते-[1]"मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति । वाजसनेयिनस्तु तयोरेवान्तराले देवलोकं [2]"मासेभ्यो देवलोकं देवलोकादादित्यम्" इति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ। तत्र मासादूर्ध्वमभिहितयोस्संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि[1]"अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासांस्तान्"इत्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात्संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते। अन्यत्र वाजसनेयिनः [3]"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते" यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यादित्यात्पूर्वं वायुमधीयते। कौषीतकिनस्तु [4]"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्" इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते । तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनां [3]"तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो

१. छा. ४-१५-५.॥—२. बृ. ८-२-१५॥—३. बृ. ७-१०-१॥—४. कौ. १-अ. ३॥

निश्चीयते । अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ । तत्रेदं चिन्त्यते—किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत्, उतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेत्—इति । किं युक्तम्? भिन्नार्थत्वम्, प्रसिद्धेः । भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोस्संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात्, विशेषाभावाच्च यथेष्टम्—

(सिद्धान्तः)

इति प्राप्त उच्यते—वायुमब्दात्—इति। वायुं संवत्सरादूर्ध्वमभिगच्छेत् । कुतः? अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात् । देवलोकशब्दो हि अविशेषेण—सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते । १"स वायुमागच्छति तस्मै स तत्र" इति वायुशब्दो विशेषेण वायुमभिधत्ते। अतो देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत्। कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते २"योऽयं पवत एष देवानां गृहाः" इति ॥ २ ॥

इति श्रीशारीरकमीमांसाभाष्ये वाय्वधिकरणम् ॥ २ ॥

---

वेदान्तसारे—वायुमब्दादविशेषविशेषाभ्याम्॥ ३"मासेभ्यस्संवत्सरं संवत्सरादादित्यम्" इत्यब्दादित्ययोर्मध्ये द्वयोः प्रकरणान्तरयोः एकत्र देवलोकः श्रुतः, इतरत्र वायुशब्दः। तत्र देवलोकशब्दोऽपि देवानां लोक इति वायोरविशेषेण वाचकः । वायुशब्दश्च तस्यैव विशेषेण वाचक इति अविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एव विहित इत्यब्दादूर्ध्वमादित्यात्पूर्वं वायुमेव निवेशयेत् ॥ २ ॥

इति वेदान्तसारे वाय्वधिकरणम् ॥ २ ॥

---

१. कौ. ७-१०-१ ॥—२ ॥—३. छा. ४-१५-५ ॥

वेदान्तदीपे—वायुमब्दादविशेषविशेषाभ्याम् ॥ [१]"तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्नः" इत्यारभ्य [१]"मासेभ्यस्संवत्सरं संवत्सरादादित्यम्" इति च्छान्दोग्ये श्रुतम्।तत्र संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुतौ श्रुत्यन्तरे। द्वयोः प्रकरणयोः किं देवलोको वायुश्चान्तरभूतौ, उत वायुरेक एवेति संशयः। शब्दभेदादर्थान्तरभूताविति पूर्वः पक्षः। अर्थान्तरत्वे सति[२]"देवलोकादादित्यम्"इति देवलोकस्य[३]"तेन स ऊर्ध्वमाक्रमते स आदित्यम्"इति वायोश्चादित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वाद्देवलोकवायू यथेष्टक्रमेण निवेशयितव्यौ। राद्धान्तस्तु -वायुरेव देवलोकशब्देन निर्दिष्ट इति तस्मादनन्यः। देवानां लोक इति हि देवलोकः, देवानां वासस्थानमित्यविशेषेण निर्दिष्टम्।[४]"योऽयं पवन एष एव देवानां गृहाः" इति वायोर्विशेषेण देवानां वासस्थानत्वेन श्रुतत्वादविशेषनिर्दिष्टो देवलोको वायुरेवेति निश्चीयत इति। संवत्सरादूर्ध्वं वायुर्वायोरादित्य इति क्रमश्च स्यात् ॥ २ ॥

सूत्रार्थस्तु-अब्दात्-संवत्सरादूर्ध्वम् आदित्यात्पूर्वं वायुमेकमेव निवेशयेत्, देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायोरेकस्यैव निर्दिष्टत्वात्। देवानां वासस्थानमित्यविशेषेण हि देवलोकशब्दः वायुं देवानामावासस्थानभूतमभिदधाति ; वायुशब्दस्तमेव विशेषेणेति द्वयोः प्रकरणद्वयविहितयोरेकत्वादित्यर्थः ॥ २॥

इति वेदान्तदीपे वाय्वधिकरणम् ॥ २ ॥

---

( श्रीशारीरकमीमांसाभाष्ये वरुणाधिकरणम् ॥ ३ ॥ )

---

# तटितोऽधि वरुणस्सम्बन्धात् । ४ । ३ । ३ ॥

कौषीतकिनां[५]"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबा-

---

१. छा. ४-१५-५ ॥—२. बृ. ८-२-१५ ॥—३. बृ. ७-१०-१ ॥—४॥—५. कौ. १-अ. ३ ॥

धेन १"देवलोकादादित्यमादित्याद्वैद्युतम्" इति वाजसनेयकोक्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशस्सिद्धः। इदानीं वरुणेन्द्रादिषु चिन्ता। किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्विद्विद्युतोऽधीति विशये, अर्चिः प्रभृतिषु सर्वेषु २"अर्चिषोऽहः" इत्यादिश्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च ३"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ च उपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः। वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि तत्रैव निवेशयितव्यौ—

(सिद्धान्तः)

इति प्राप्त उच्यते—तटितोऽधि वरुणः—इति। वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः। कुतः; सम्बन्धात्—मेघोदरवर्तित्वाद्विद्युतो वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः। एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधि वरुणो निवेशयितव्यः; ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये वरुणाधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—तटितोऽधि वरुणस्सम्बन्धात्॥ तटितोऽनन्तरं वरुणो निवेश्यः, मेघोदरवृत्तित्वाद्विद्युतः, मेघस्थजलात्मकत्वेन लोकवेदयोर्वरुणस्य विद्युत्सम्बन्धावगमात्, तदनन्तरमिन्द्रप्रजापती पाठक्रमात्, प्रबलविशेषाभावाच्च॥

इति वेदान्तसारे वरुणाधिकरणम् ॥ ३ ॥

---

१. बृ. ८-२-१५ ॥—२. छा. ४-१५-५ ॥—३. छा. ४-१५-५,६ ॥

वेदान्तदीपे—तटितोऽधि वरुणस्सम्बन्धात्॥ छान्दोग्यवाजसनेयककौषीतकीप्रभृतिष्वाम्नातस्यार्चिरादिमार्गस्यार्चिरहरापूर्यमाणपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रविद्युद्वरुणेन्द्रप्रजापतिरूपस्योपसंहारे वायुपर्यन्तस्य श्रुत्यादिभिः क्रमप्रकार उक्तः। वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः, उत वायोरुपरीति संशयः।[१] "स वायुलोकं स वरुणलोकम्" इति कौषीतकीपाठक्रमेण वायोरुपरि वरुणस्य निवेशः। इन्द्रादेरपि वरुणनिवेशाय वाय्वादित्ययोः क्रमस्य बाधितत्वात्तत्रैव वरुणोपरीति पूर्वः पक्षः। राद्धान्तस्तु—विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोर्लोके वेदे च सम्बन्धावगमात्पाठक्रमादर्थक्रमस्य बलीयस्त्वेन वरुणस्य विद्युत उपरि निवेशः कार्यः। इन्द्रादेरपि वरुणनिवेशाय विद्युतो व्यवधानसहत्वदर्शनाद्वरुणोपरि निवेशः। सूत्रं च व्याख्यातम्॥

इति वेदान्तदीपे वरुणाधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये आतिवाहिकाधिकरणम्॥ )

---

## आतिवाहिकास्तल्लिङ्गात्। ४। ३। ४॥

इदमिदानीं चिन्त्यते—किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढारः—इति। किं तावद्युक्तम्? मार्गचिह्नभूता इति। कुतः? उपदेशस्य तथाविधत्वात्; दृश्यते हि लोके ग्रामादीन् प्रति गन्तॄणामेवंविधो देशिकैरुपदेशः—'इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति। अथवा, भोगभूमय एतास्स्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेरन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात्। भोगभूमित्वं च [२]"एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सराः" इत्यहरादीनां लोकत्ववचनादुपपद्यते। अत एव च कौ-

१. कौ. १-अ. ३ ॥—२. तै. ना. ८०-अनु ॥

षीतकिनः १"अग्निलोकमागच्छति" इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति ॥

—( सिद्धान्तः )—

एवं प्राप्ते ब्रूमः—आतिवाहिकाः—इति। विदुषामतिवाहे परमपुरुषेण नियुक्ताः आतिवाहिकाः देवताविशेषा एतेऽर्चिरादयः । कुतः? तल्लिङ्गात्—अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । गमयितृत्वं च २"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव सम्बन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतानभिमानिदेवताविशेषान् । ३"तं पृथिव्यब्रवीत्" इतिवत् ॥ ४ ॥

यद्येवं २"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति वैद्युतस्यैव पुरुषस्य ब्रह्मगमयितृत्वश्रुतेर्विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत्राह—

# वैद्युतेनैव ततस्तच्छ्रुतेः । ४ । ३ । ५ ॥

ततः—विद्युत उपरि, वैद्युतेन—अमानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेर्गमनम् । कुतः? तच्छ्रुतेः २"स एनान् ब्रह्म गमयति" इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्त्वनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५ ॥

इति श्रीशारीरकमीमांसाभाष्ये आतिवाहिकाधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—आतिवाहिकास्तल्लिङ्गात् ॥ अर्चिराद्यभिमानिदेवताविशेषाः विदुषामातिवाहिकत्वेन परमपुरुषनियुक्ताः— इति विज्ञायते, २"स एनान् ब्रह्म गमयति" इति तेष्वेकत्र गमयितृत्वदर्शनात् लिङ्गात् ॥ ४ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ २"चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स

---

१. कौ. १-अ. ३ ॥—२. छा. ४-१५-५,६ ॥—३. यजु. ५-५-२॥

एनान् ब्रह्म गमयति" इति श्रुतेः वैद्युतपुरुषात्परस्तात्स एव ब्रह्म गमयिता। वरुणेन्द्रप्रजापतीनां तदनुग्राहकत्वमेव॥ ५॥

इति वेदान्तसारे आतिवाहिकाधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—आतिवाहिकास्तल्लिङ्गात् ॥ किमर्चिरादयो विदुषो ब्रह्म प्रेप्सोर्मार्गचिह्नभूताः, उत गमयितार इति संशयः। 'अमुकं वृक्षममुकां नदीममुकं पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इत्यादिदेशिकोपदेशप्रकारदर्शनान्मार्गचिह्नभूताः—इति पूर्वः पक्षः। राद्धान्तस्तु [1]" स एनान्ब्रह्म गमयति" इति वैद्युतपुरुषस्य गमयितृत्वदर्शनात् इतरेषां चाविशेषनिर्दिष्टानां स एव सम्बन्ध इति निश्चीयते। [2]"अग्निलोकम्" इत्यादिलोकशब्दोऽपि मध्ये भोगाभावाद्गमयितृत्व एवोपपद्यते। सूत्रार्थस्तु—आतिवाहिकाः—विदुषामतिवाहे परमपुरुषेण नियुक्ताः,अर्चिराद्यभिमानिदेवताविशेषाः गमयितार इत्यर्थः, [1]" स एनान्ब्रह्म गमयति" इति लिङ्गात् ॥ ४ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः॥ ततः विद्युत उपरि वैद्युतेन विदुषो गमनम्, तच्छ्रुतेः—[1]" स एनान्ब्रह्म गमयति" इति तस्यैव श्रुतेः। वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति निश्चीयत इत्यर्थः॥ ५॥

इति वेदान्तदीपे आतिवाहिकाधिकरणम् ॥ ४ ॥

---

(श्रीशारीरकमीमांसाभाष्ये कार्याधिकरणम् ॥ ५ ॥)

---

## कार्यं बादरिरस्य गत्युपपत्तेः । ४ । ३ । ६ ॥

अर्चिरादिनैव गच्छति विद्वान्; अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम्। इदमिदानीं चिन्त्यते। किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति, उत परमेव ब्रह्मोपासीनान्, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च—इति विशये—कार्यमुपासीनानेव गमयतीति बादरिराचार्यो

---

१. छा. ४-१५-६ ॥—२. कौषी. १-अ. ३ ॥

मन्यते। कुतः? अस्य–हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः; न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते, प्राप्तत्वादेव; नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम्। कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते। अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति॥ ६॥

## विशेषितत्वाच्च। ४। ३। ७॥

[1]"पुरुषोऽमानव एत्य ब्रह्मलोकान्गमयति" इति लोकशब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशेष्यते। किञ्च [2]"प्रजापतेस्सभां वेश्म प्रपद्ये" इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसन्धत्ते॥ ७॥

नन्वेवं[3]"तत्पुरुषोऽमानवः"[4]"स एनान् ब्रह्म गमयति"इत्ययं निर्देशो नोपपद्यते; हिरण्यगर्भनयने हि 'स एनान् ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात्; अत आह—

## सामीप्यात्तु तद्व्यपदेशः। ४। ३। ८॥

[5]"यो ब्रह्माणं विदधाति" इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य ब्रह्मशब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः॥ ८॥

अथ स्यात्–अर्चिरादिना हिरण्यगर्भप्राप्तौ [4]"एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" [6]"तयोर्ध्वमायन्नमृतत्वमेति" [7]इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते,हिरण्यगर्भ-

१. बृ. ८-२-१५॥—२. छा. ८-१४-१॥—३. छा. ४-१५-५॥—४. छा. ४-१५-६॥—५. श्वे. ६-१८॥—६. कठ. २-६-१६॥—७. इत्यमृतत्वापुनरावृत्तिव्यपदेशः. पा॥

स्य कार्यभूतस्य द्विपरार्धकालावसाने विनाशशास्त्रात् [१]"आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इतिवचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वात्–इति; अत्राह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । ४ । ३ । ९ ॥

कार्यस्य-ब्रह्मलोकस्यात्यये तदध्यक्षेण - हिरण्यगर्भेणाधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्यः;अतः–कार्याद्ब्रह्मलोकात् परं ब्रह्म प्राप्नोतीत्यर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् [२]"ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥ ९ ॥

## स्मृतेश्च । ४ । ३ । १० ॥

स्मृतेश्चायमर्थोऽवगम्यते–[३]"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति। अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

## परं जैमिनिर्मुख्यत्वात् । ४ । ३ । ११ ॥

परं ब्रह्मोपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते;कुतः? मुख्यत्वात्–[४]"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम्, परस्य ब्रह्मणस्सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशा-

१. गी. ८-१६ ॥—२. तै. ना. १०-अनु-२४ ॥ —३. कूर्मपुराणे. पूर्वख. १२-२६९ ॥—४. छा. ४-१५-५, ६ ॥

त्वात्। यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा [1]"तमेतं वेदानुवचनेन" इत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते। विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम्। यत्तु [2]"ब्रह्मलोकान्" इति लोकशब्दबहुवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति; तदयुक्तम्, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्, अर्थस्य चैकत्वे निश्चिते बहुवचनस्य [3]"अदितिः पाशान्" इतिवदुपपत्तेः; परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥ ११ ॥

## दर्शनाच्च । ४ । ३ । १२ ॥

दर्शयति श्रुतिः मूर्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम् [4]"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति ॥ १२ ॥

यदुक्तं [5]"प्रजापतेस्सभां वेश्म प्रपद्ये" इत्यर्चिरादिना गतस्य कार्ये प्रत्यभिसन्धिर्दृश्यत इति; तत्रोत्तरं—

## नच कार्ये प्रत्यभिसन्धिः । ४ । ३ । १३ ॥

न चायं प्रत्यभिसन्धिः कार्ये हिरण्यगर्भे; अपि तु परस्मिन्नेव ब्रह्मणि, वाक्यशेषे [5]"यशोऽहं भवामि ब्राह्मणानाम्" इति तस्याभिसन्धातुस्सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात्, [6]"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इत्यभिसम्भाव्यस्य ब्रह्मलोकस्याकृतत्व-

---

१. बृ. ६-४-२२ ॥—२. बृ. ८-२-१५ ॥—३ ॥—४. छा. ८-३-४ ॥—५ छा. ८-१४-१ ॥—६. छा. ८-१३-१ ॥

श्रवणात्, सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् । अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च । ४ । ३ । १४ ॥

अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते; एतदुक्तं भवति— कार्यमुपासीनान्नयतीति नायं पक्षस्सम्भवति; परमेवोपासीनानित्ययमपि नियमो नास्ति; न च प्रतीकालम्बनानपि नयति; अपितु ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तानुभयविधान्नयति; ये तु ब्रह्मकार्यान्तर्भूतनामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या, केवलं वा तत्तद्वस्तूपासते, न तान्नयति। अतः परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयति—इति। कुतः? उभयथा च दोषात्। कार्यमुपासीनान्नयतीति पक्षे [१]"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य"इत्यादिकाः श्रुतयः प्रकुप्येयुः; परमेवोपासीनानिति नियमे [२]"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति पञ्चाग्निविदोऽर्चिरादिर्गणो नयतीति श्रुतिः प्रकुप्येत् । अतः उभयस्मिन्नपि पक्षे दोषस्स्यात्। तस्मादुभयविधान्नयतीति। तदेतदाह—तत्क्रतुश्च—इति। तत्क्रतुः—तथोपासीनस्तथैव प्राप्नोतीत्यर्थः, [३]"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" [४]"तं यथायथोपासते"इति न्यायात्।पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव

१. छा. ८-३-४ ॥—२. छा. ५-१०-१ ॥—३. छा. ३-१४-१ ॥—४ ॥

तत्क्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम्। नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते॥ १४॥

तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—

## विशेषञ्च दर्शयति।४।३।१५॥

१"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति"इत्यादिका श्रुतिः२नामादिप्राणपर्यन्तप्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति; तस्मादचिन्मिश्रं केवलं वाचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते, न तान् नयति, अपितु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गणो नयतीति सिद्धम्॥

इति श्रीशारीरकमीमांसाभाष्ये कार्याधिकरणम्॥ ५॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः॥ ३॥

वेदान्तसारे—कार्यं बादरिरस्य गत्युपपत्तेः॥ कार्यं-हिरण्यगर्भमुपासीनानर्चिरादिर्नयति, अस्यैव गत्युपपत्तेः। न हि सर्वगतं परं ब्रह्मोपासीनानां गतिरस्तीति बादरिः मेने॥ ६॥

विशेषितत्वाच्च॥ ३"पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति"४"प्रजापतेस्सभां वेश्म प्रपद्ये" इति च विशेषितत्वात् हिरण्यगर्भमेव॥ ७॥

सामीप्यात्तु तद्व्यपदेशः॥ ५"ब्रह्म गमयति" इति ब्रह्मव्यपदेशस्तत्सामीप्यात्; अस्य ६"यो ब्रह्माणं विदधाति पूर्वम्" इति सामीप्यमस्ति हि॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्॥ हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिश्रुत्यविरोधः, हिरण्यगर्भलोकात्यये तदध्यक्षेण सहातः परं ग-

१. छा. ७-१-५॥—२. नामादिप्रतीकमुपा. पा॥—३. बृ. ८-२-१५॥—४. छा. ८-१४-१॥—५. छा. ५-१०-२॥—६. श्वे. ६-१८॥

च्छति, १"ते ब्रह्म लोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति श्रुतेः ॥ ९ ॥

स्मृतेश्च ॥ २"ब्रह्मणा सह ते सर्वे"-इत्यारभ्य "प्रविशन्ति परं पदम्" इति स्मृतेश्च ॥ १० ॥

परं जैमिनिर्मुख्यत्वात् ॥ परमुपासीनानिति जैमिनिः, ३"ब्रह्म गमयति" इति तत्रैव मुख्यत्वात् ॥ ११ ॥

दर्शनाच्च ॥ ४"अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य" इति श्रुतेश्च ॥ १२ ॥

नच कार्ये प्रत्यभिसन्धिः ॥ ५"प्रजापतेस्सभाम्" इति प्रत्यभिसन्धिश्च न कार्ये, प्रजापतिशब्दस्य ६"पतिं विश्वस्य" इत्यादिश्रुतेः परस्मिन्नेव मुमुख्यत्वात्; ब्रह्मलोकशब्दश्च कर्मधारयवृत्त्या तत्रैवेत्यभिप्रायः । ७"ते ब्रह्मलोके" इति तु श्रुतिः ब्रह्मैव लोक इति परब्रह्मविषयैव । २"ब्रह्मणा सह ते सर्वे" इति स्मृतिश्च ८"तदुपर्यपि" इति न्यायेन चतुर्मुखलोकस्थोपासनविषया ॥ १३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ प्रतीकालम्बना हि—नामादिप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपपर्यन्तं सर्वं चिदचिद्वस्तुजातं ब्रह्मदृष्ट्या स्वरूपेण वा ये उपासते, ते; अप्रतीकालम्बनाः —तद्व्यतिरिक्ताः, ये पञ्चाग्निविदः, ये च परं ब्रह्मोपासते; तान्नयत्यर्चिरादिरिति भगवान् बादरायणो मन्यते । कार्यमिति पक्षे, परमेवेति च पक्षे सकलोपनिषद्विरोधरूपदोषः प्रसज्यते । कार्यपक्षे ९"ब्रह्म गमयति" १०"परं ज्योतिरुपसम्पद्य" इत्याद्याः प्रकुप्येयुः । परमेवेति पक्षे ११"य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिषमभिसम्भवन्ति" इति श्रुतिः प्रकुप्येत । कार्यपक्षे तत्क्रतुन्यायश्च विरुध्यते । अर्चिरादिना गतानां हि ब्रह्मप्राप्तिरपुनरावृत्तिश्च श्रूयते।पञ्चाग्निविदस्तु प्रकृतिवियुक्तात्मस्वरूपं १२"य आत्मनि तिष्ठन्"

---

१. तै. ना. १०-अनु-२४ ॥—२. कूर्मपुराणे-पूर्वख. १२-२६९ ॥—३. छा. ४-१५-६ ॥—४. छा. ८-३-४ ॥— ५. छा. ८-१४-१ ॥— ६. तै. ना. ११-अनु ॥—७. तै. ना. १०-अनु-२४ ॥—८. शारी. १-३-२५ ॥— ९. छा. ५-१०-२ ॥—१०. छा. ८-३-४ ॥—११. बृ. ८-२-१५ ॥—१२. बृ. ५-७-२२ मा. पा ॥

इत्यादिनाऽवगतब्रह्मात्मकत्वमुपासत इति ह्यप्रतीकालम्बनत्वम्। तत्क्रतुन्यायाविरोधश्च; उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन—स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे—इति ॥ १४ ॥

विशेषञ्च दर्शयति॥ कार्यमुपासीनानां ब्रह्मप्राप्तिव्यतिरिक्तपरिमितदेशकालफलविशेषञ्च दर्शयति श्रुतिः १ "यावन्नाम्नो गतम्" इत्यादिका॥ १५॥

इति वेदान्तसारे कार्याधिकरणम् ॥ ५ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

वेदान्तदीपे—कार्यं बादरिरस्य गत्युपपत्तेः॥ किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति, उत परं ब्रह्मोपासीनान्, अथ परं ब्रह्मोपासीनान्, प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति संशयः। कार्यं हिरण्यगर्भमुपासीनानिति पूर्वः पक्षः, तेषामेव गत्युपपत्तेः। न हि परिपूर्णं सर्वगतं परं ब्रह्मोपासीनानां तत्प्राप्तये गतिरुपपद्यते, नित्यप्राप्तत्वात्। अविद्यानिवृत्तिरेव हि कार्या। परमेवोपासीनानित्यपरः पक्षः, २"स एनान्ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्। अविद्यानिवृत्तेः फलाभिसन्धिरहितयज्ञाद्यपेक्षावत् श्रवणाद्यपेक्षावच्च गतिश्रुत्या देशविशेषापेक्षा च विद्यत इति निश्चीयते। राद्धान्तस्तु—परमुपासीनानन्यानपि नयति, २"तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति पञ्चाग्निविदां परं ब्रह्मोपासीनानां चार्चिरादिगतिश्रुतेः। पञ्चाग्निविदो हि प्रकृतिविमुक्तब्रह्मात्मकात्मस्वरूपविदः। ते च तत्प्राप्य पुनर्न निवर्तन्ते। परं ब्रह्मोपासीनास्तु यथावस्थितं परिपूर्णं परं ब्रह्मैव प्राप्य पुनर्न निवर्तन्ते। २"तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इत्युभयविधाभेदेनोपादायार्चिरादिगतिश्रुतेरपुनरावृत्तिश्रुतेश्चैवमिति निश्चीयते॥

सूत्रार्थस्तु—कार्यं - हिरण्यगर्भमुपासीनमातिवाहिको गणो नयतीति बादरिराचार्यो मन्यते, अस्यैव गत्युपपत्तेः; परमुपासीनस्य हि न तत्प्राप्तये गतिरुपपद्यते सर्वगतत्वात्परस्य ब्रह्मणः॥ ६॥

विशेषितत्वाच्च॥ ३ "पुरुषोऽमानव एत्य ब्रह्मलोकान्गमयति" इति

---

१. छा. ७-१-५॥—२. छा. ५-१०-२,१॥—३. बृ. ८-२-१५॥

१"प्रजापतेस्सभां वेश्म प्रपद्ये" इति च प्राप्यस्थानस्य विशेषितत्वाच्च हिरण्यगर्भमुपासीनमेव नयति ॥ ७ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ एवं निश्चिते सति २"स एनान्ब्रह्म गमयति" इति हिरण्यगर्भस्य ब्रह्मशब्दव्यपदेशो ब्रह्मसामीप्यात्; ३"यो ब्रह्माणं विदधाति पूर्वम्" इति प्रथमजत्वेन ब्रह्मसामीप्यं हि विद्यते ॥ ८ ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिरुपपद्यते, कार्यस्य-हिरण्यगर्भलोकस्यात्यये, तदध्यक्षेण-हिरण्यगर्भेणाधिकारिकपुरुषेण विदुषा सह परप्राप्त्यभिधानात् ४"ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति ॥ ९ ॥

स्मृतेश्च ॥ ५"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मृतेश्चावगम्यते ॥ १० ॥

परं जैमिनिर्मुख्यत्वात् ॥ परं ब्रह्मोपासीनमेव नयत्यातिवाहिको गण इति जैमिनिराचार्यो मन्यते ६"ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् । ७"ब्रह्मलोकान्" इति शब्दश्च ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयपरिग्रहस्यैव न्याय्यत्वादुपपद्यते । एवं निश्चिते सति बहुवचनं च ८"अदितिः पाशान्" इतिवदुपपन्नम् ॥ ११ ॥

दर्शनाच्च ॥ ९"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यर्चिरादिना गतस्य परब्रह्मप्राप्तिं दर्शयति च ॥ १२ ॥

नच कार्ये प्रत्यभिसन्धिः॥ १"प्रजापतेस्सभां वेश्म प्रपद्ये" इति प्रत्यभिसन्धिश्च न कार्ये १०"धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इत्यकृतं ब्रह्मलोकमिति तत्रैव विशेषितत्वात्, १"यशोऽहं भवामि ब्राह्मणानाम्" इति सर्वात्मभावाभिसन्धानाच्च ॥ १३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ कार्यमुपासीनानेवेति नायं नियमः, परमेवोपासीनानित्ययमपि नियमो न सम्भवति ; कुतः ? उभयथाच दोषात्—कार्यमुपासीनानेवेति नियमे९"अ-

---

१ छा. ८-१४-१ ॥—२. छा. ५-१०-२ ॥—३. श्वे. ६-१८ ॥—४. तै. ना. १०-२४ ॥ — ५. कूर्मपुराणे, पूर्वख. १२-२६९ ॥ —६. छा. ४-१५-६ ॥ —७. बृ. ८-२-१५ ॥—८ ॥—९. छा. ८-३-४ ॥—१०. छा. ८-१३-१ ॥

स्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिकाश्श्रुतयः, १"ये चेमेऽरण्ये श्रद्धा तपः" इति च प्रकुप्येयुः;परमेवेति नियमे १"तद्य इत्थं विदुः" इति प्रकुप्येत् । तस्मादप्रतीकालम्बनान्नयतीति भगवान्बादरायणो मन्यते । प्रतीकालम्बनास्तु—अचिन्मिश्रम् ,१केवलमचिद्वस्तु च 'सिंहो देवदत्तः' इतिवत् ब्रह्मदृष्ट्या स्वरूपेण वा तद्वस्तु य उपासते, ते ; अप्रतीकालम्बनाः-तद्व्यतिरिक्ताः । सर्वज्ञं सर्वकारणं सत्यसङ्कल्पं निखिलहेयप्रत्यनीकानवधिकातिशयानन्दस्वरूपं ब्रह्मोपासते ये, ये च प्रत्यगात्मानं भूतसूक्ष्मैस्सम्परिष्वक्तं सर्वत्र वर्तमानं भूतसूक्ष्मव्यतिरिक्तं ज्ञानैकस्वरूपं नित्यं निर्विकारं २"य आत्मनि तिष्ठन्" इत्यादिनावगतब्रह्मात्मभावं पञ्चाग्निविद्योदितमुपासते, तानुभयविधान्नयति १"तद्य इत्थं विदुर्येचेमेऽरण्ये" इत्युभयविषयश्रुतेः । तत्क्रतुश्च ३"यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्युभयेषामेवापुनरावृत्तिस्सम्भवति । अचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां तत्क्रतुन्यायादेव पुनरावृत्तिरवर्जनीया ॥ १४ ॥

विशेषञ्च दर्शयति ॥ प्रतीकाद्युक्तलक्षणमचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां सर्वेषां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति श्रुतिः—४"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्यादिका । अतः ५ "ब्रह्मणा सह ते सर्वे" इति वचनं नार्चिरादिना गतानां गतिप्रकारविषयम् ; अर्चिरादिना गतानां देहावसानसमय एव सुकृतदुष्कृतयोर्हानाद्धिरण्यगर्भलोकावाप्तितद्वासतत्रस्थभोगानुभवहेत्वभावात् , तत्क्रतुन्यायविरोधात् , तदानीमेव ब्रह्मप्राप्तिश्रुतिविरोधाच्च । ५"ब्रह्मणा सह ते सर्वे" इति वचनं तु पुण्यकर्मविशेषेण हिरण्यगर्भलोकं प्राप्तानां ६"तदुपर्यपि बादरायणः" इति न्यायेन तत्रैव निष्पन्नविद्यानां गतिप्रकारविषयम्।७"ते ब्रह्मलोके" इति तु ब्रह्मलोकशब्दस्य कर्मधारयवृत्त्या ब्रह्मविषयत्वात् , ब्रह्मण्युपास्ये वर्तमानाः परान्तकाले- चरमदेहावसानसमये, परामृतात् - परस्माद्ब्रह्मण उपासनप्रीताद्धेतोः, परिमुच्यन्ति सर्वे सर्वस्माद्बन्धाद्विमुच्यन्त इति ७"वेदान्तविज्ञानसुनिश्चितार्थाः" इति प्रकरणादवगम्यते । १"तद्य इत्थं विदुः" इति पञ्चाग्निविदां ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात्तत्क्रतुन्यायेनाचिद्वियुक्तब्रह्मात्मकात्मस्वरूपोपासनं विवक्षितमिति नि-

१. छा. ५-१०-१ ॥— २. बृ. ५-७-२२ मा-पा ॥—३. छा. ३-१४-१ ॥— ४. छा. ७-१-५ ॥—५ ॥—६. शारी. १-३-२५ ॥ — ७. तै. ना. ११-२२ अनु ॥

श्रीयते । तथैव तत्र श्रुतिरपि १"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति २"रमणीयचरणाः" इति च । कर्महेतुकमनुष्यादिभावोऽपामेव भूतान्तरसंसृष्टानामिति चिदचिद्विवेकं प्रतिपाद्य३"तद्य इत्थं विदुः"इति भूतसूक्ष्मव्यतिरिक्तात्मस्वरूपोपासनमेव विदधाति॥ १५ ॥

इति वेदान्तदीपे कार्याधिकरणम् ॥ ५ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य
तृतीयः पादः ॥ ३ ॥

---

१. छा. ५-९-१ ॥—२, छा, ५-१०-७ ॥—३. छा. ५-१०-१ ॥



श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(चतुर्थाध्याये-चतुर्थः पादः-सम्पद्याविर्भावाधिकरणम्।। १)

## सम्पद्याविर्भावस्स्वेनशब्दात् । ४ । ४ । १ ॥

परं ब्रह्मोपासीनानामात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता; इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते । इदमाम्नायते– [1]"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति । किमस्माच्छरीरात्समुत्थाय परज्योतिरुपसम्पन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते, उत स्वाभाविकस्य स्वरूपस्याविर्भाव इति संशये, साध्येन रूपेण सम्बन्ध इति युक्तम् । अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्, स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारेषूपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते; न च दुःखनिवृत्तिमात्रं परं ज्योतिरु-

१. छा. ८-१२-२ ॥

पसम्पन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्षः इत्युच्येत; १"स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य" २"रसं ह्येवायं लब्ध्वाऽनन्दी भवति" इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात्। नचापरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपम्, तच्च संसारदशायामविद्यया तिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवतीति शक्यं वक्तुम्, ज्ञानस्वरूपस्य तिरोधानासम्भवात्। प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम्। नच प्रकाशमात्रस्याऽनन्दता सम्भवति; सुखस्वरूपता ह्यानन्दस्वरूपता; सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम्; प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथंचिदप्यानन्दस्वरूपता दुरुपपादा। स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसम्पन्नस्य ३"स्वेन रूपेणाभिनिष्पद्यते" इति वचनमनर्थकं स्यात्। अतोऽपूर्वेण साध्येन रूपेण सम्पद्यते। एवं च ३"अभिनिष्पद्यते" इति वचनं मुख्यार्थमेव भवति। ३"स्वेन रूपेण" इत्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छत इति॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—सम्पद्याविर्भावः—इति। अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः; नापूर्वाकारोत्पत्तिरूपः। कुतः? स्वेन शब्दात् ३"स्वेन रूपेण" इति विशेषणोपादानादित्यर्थः। आगन्तुकविशेषपरिग्रहे हि ३"स्वेन रूपेण" इति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः॥

यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वात् ३"उपसम्पद्याभिनिष्पद्यते" इति वचनमनर्थकमिति—तत्रोत्तरं—

## मुक्तः प्रतिज्ञानात्। ४। ४। २॥

---

१. तै. आन. ८-अनु. ४॥—२. तै. आन. ७-१॥—३. छा. ८-१२-२॥

कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकरूपेणावस्थितोऽत्र [1]"स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते ! अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते। कुतः? प्रतिज्ञानात्—सा हि प्रतिपाद्यतया प्रतिज्ञाता। कुत इदमवगम्यते? [2]"य आत्मा" इति प्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं, प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम् [3]"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति पुनःपुनरुक्त्वा [1]"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यभिधानात्। अतः कर्मणा सम्बद्धस्य परं ज्योतिरुपसम्पद्य बन्धनिवृत्तिरूपा मुक्तिः स्वेन रूपेणाभिनिष्पत्तिरुच्यते। स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, 'युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥ २ ॥

यच्चोक्तम्—आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात्स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत्सुखसम्बन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिः—इति ; तत्रोत्तरम्—

## आत्मा प्रकरणात् । ४ । ४ । ३ ॥

स्वरूपेणैवायमात्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः प्रकरणादवगम्यते ; [2]"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति हि प्रजापतिवाक्यप्रक्रमः ; इदं च प्रकरणं प्रत्यगात्मविषयमिति [4]"उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र प्रतिपादितम्। अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्याविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसम्पद्याविर्भूतस्वरूपो भवति। अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयस्स्वाभाविका

१. छा. ८ १२ २ ॥—२. छा. ८-७-१ ॥—३. छा. ८-९-३ ॥—४. शारी. १-३-१८ ॥

गुणाः परं ज्योतिरुपसम्पन्नस्याविर्भवन्ति ; नोत्पद्यन्ते ; यथोक्तं भगवता शौनकेनापि [1]"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा । यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति । अतो ज्ञानानन्दादिगुणानां कर्मणा आत्मनि सङ्कुचितानां परं ज्योतिरुपसम्पद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं—सम्पद्याविर्भावः—इति ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

---

वेदान्तसारे—सम्पद्याविर्भावस्स्वेनशब्दात् ॥ [2]"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति सिद्धस्यैव प्रत्यगात्मस्वरूपस्य अनादिकर्मणा तिरोहितस्य परं ज्योतिरुपसम्पद्याविर्भाव उच्यते ; [2]"स्वेन रूपेण" इति विशिष्याभिधानात् ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि कर्मबन्धविनिर्मुक्तापरिच्छिन्नज्ञानादिस्वरूपस्य ह्यत्राविर्भाव उच्यते । [3]"एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि" इति जागरिताद्यवस्थातिरोधानविनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ॥ २ ॥

आत्मा प्रकरणात् ॥ [3]"भूयोऽनुव्याख्यास्यामि" इति प्रकृतापहतपाप्मत्वादिगुणक आत्मेति प्रकरणादवगम्यते ; [4]"य आत्माऽपहतपाप्मा" इत्यारभ्य [4]"सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यः" इति प्रकृत्य [3]"एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्युक्तम् ॥ ३ ॥

इति वेदान्तसारे सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—सम्पद्याविर्भावस्स्वेनशब्दात् ॥ [2]"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"

---

१. विष्णुधर्मे. १०४. ५५, ५६, ५७ ॥—२. छा. ८-१२-२ ॥—३. छा. ८-९-३ ॥—४. छा. ८-७ १ ॥

इति किं परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनस्स्वरूपाविर्भावः प्रतिपाद्यते, उत, तान्येन साध्येन रूपेण सम्बन्ध इति संशयः। स्वस्वरूपस्य सुषुप्त्यादौ निरानन्दत्वदर्शनात्, स्वरूपमात्रस्य नित्याविर्भूतत्वाच्च, साध्येन सुखैकान्तेन रूपेण सम्बध्यते। एवंच १"अभिनिष्पद्यते" इतिवचनं सङ्गच्छते। परं ज्योतिरुपसम्पन्नस्य ह्यानन्दित्वं श्रूयते २"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति"३"स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इत्यादिषु। अतस्साध्येन रूपेणेति पूर्वः पक्षः। राद्धान्तस्तु—१"स्वेन रूपेणाभिनिष्पद्यते" इति विशेषणात्स्वरूपाविर्भाव एव। स्वरूपस्य चापहतपाप्मत्वादिगुणकतया प्रजापतिवाक्योदितस्य कर्मकृतदेहसम्बन्धतत्कृततिरोधानस्य परज्योतिरुपसम्पत्त्या सूक्ष्मदेहविनिर्मुक्तस्यासङ्कुचितज्ञानादिगुणकस्वरूपाविर्भावात् स्वयाथात्म्यानुभवपूर्वकानवधिकातिशयानन्दब्रह्मानुभवस्सम्पत्स्यत इति 'अभिनिष्पद्यते' इतिचोपपन्नतरम्। सूत्रार्थस्तु—परं ज्योतिरुपसम्पद्य स्वस्वरूपाविर्भावः प्रतिपाद्यते। कुतः? स्वनशब्दात्—साध्यस्यापि रूपस्य स्वासाधारणत्वेन स्वेनेति विशेषणं ह्यनर्थकम्॥१॥

स्वस्वरूपमात्रस्य 'अहं जानामि' इति नित्याविर्भूतत्वेन १"परं ज्योतिरुपसम्पद्य" इत्यनर्थकमित्याशङ्क्याह—

**मुक्तः प्रतिज्ञानात्॥** कर्मसंबन्धतत्कृतदेहादेर्मुक्तस्वरूपमत्र १"स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते। कथमिदमवगम्यते? ४"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति कर्महेतुकदेहसम्बन्धतत्कृतजागरिताद्यवस्थाविनिर्मुक्तस्वरूपस्यात्र वक्तव्यतया प्रतिज्ञानात्॥ २॥

एवमपि स्वरूपमात्राविर्भावस्य पुरुषार्थत्वं न सिद्ध्यतीत्याशङ्क्याह—

**आत्मा प्रकरणात्॥** देहादिविनिर्मुक्तः स्वरूपेणावस्थित आत्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः;तस्य ह्याविर्भाव उच्यते; कुतः? प्रकरणात्; ५"य आत्मा अपहतपाप्मा" इति प्रकृत्य हि ४"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्यादिनोच्यते। अतोऽपहतपाप्मत्वादिगुणकस्वरूपस्य कर्माख्याविद्यातिरोहितस्य परंज्योतिरुपसम्पद्य निवृत्ततिरोधानस्याऽविर्भावः प्रतिपाद्यते॥३॥

इति वेदान्तदीपे सम्पद्याविर्भावाधिकरणम्॥ १॥

---

१. छा. ८-१२-२॥—२. तै. आन. ७-अनु. १॥—३. तै. आन. ८ अनु. ४॥—४. छा. ८-९-३॥—५. छा. ८-७-१॥

# अविभागेन दृष्टत्वात् । ४ । ४ । ४ ॥

किमयं परं ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्—इति विशये [१] "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" [२] "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" [३] "इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति—

( सिद्धान्तः )

इति प्राप्त उच्यते—अविभागेन—इति। परस्माद्ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः । कुतः? दृष्टत्वात्—परब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि [४] "तत्त्वमसि" [५] "अयमात्मा ब्रह्म" [४] "एतदात्म्यमिदं सर्वं" [६] "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यनिर्देशैः [७] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" [८] "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम् [९] "अवस्थितेरिति काशकृत्स्नः" इत्यत्र । अतोऽविभागेन 'अहं ब्रह्मास्मि' इत्येवानुभवति। साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्य-

१. तै. आन. १-२ ॥—२. मु-३. १-३ ॥ —३. गी. १४-२॥—छा. ६-८-७॥ —५ ॥—६. छा. ३-१४-१॥—७. बृ. ५-७-२२. मा-पा ॥—८. आरण. १-३-२१॥ —९. शारी. १-४-२२ ॥

गात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदविभागोक्तेर्हि [1]"सङ्कल्पादेव तच्छ्रुतेः" इत्यादि न विरुध्यते, [2]"अधिकन्तु भेदनिर्देशात्" [3]"अधिकोपदेशात्" इत्यादि च ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

---

वेदान्तसारे—अविभागेन दृष्टत्वात् ॥ आविर्भूतस्वरूपोऽयम्मुक्तात्मा स्वात्मशरीरकं परं ब्रह्म स्वात्मनोऽप्यात्मतया 'अहं ब्रह्मास्मि' इत्यविभागेनैवानुभवति, [4]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति तथारूपोपासनेन तथाविधस्वरूपस्य दृष्टत्वात् । [5]"य आत्मनि तिष्ठन्...यस्याऽत्मा शरीरं स त आत्मा" [6]"तत्त्वमसि" इत्यादिशास्त्रसिद्धमेव ह्युपासितम् ॥ ४ ॥

इति वेदान्तसारे अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—अविभागेन दृष्टत्वात् ॥ किमयं मुक्त आविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति, उत स्वात्मनोऽप्यात्मतयाऽविभागेन 'अहं ब्रह्मास्मि' इति संशयः । [7]"निरञ्जनः परमं साम्यमुपैति" [8]"सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चितेति" [9]"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इति श्रुतिस्मृतिभ्यः विभक्तमनुभवतीति पूर्वः पक्षः । राद्धान्तस्तु—[10]"सर्वं खल्विदं ब्रह्म" [6]"ऐतदात्म्यमिदं सर्वम्...तत्त्वमसि" इत्यादिना सामानाधिकरण्येन [11]"यः पृथिव्यां तिष्ठन्...यस्य पृथिवी शरीरं" [3]"य आत्मनि तिष्ठन्...यस्याऽत्मा शरीरम्" इत्यादिषु सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् तत्तद्वस्तुबुद्धिशब्दास्तत्पर्यन्तविषया इत्यवगम्य [4]"आत्मेति तूपगच्छन्ति" इतिन्यायेन स्वात्मनोऽप्यात्मतया 'अहं ब्रह्मास्मि' इत्युपासनेन यथावस्थितपरमात्मात्मकस्वात्मनो दृष्टत्वात् मुक्तः स्वात्मनोऽप्यात्मभूतं ब्रह्म 'अहं ब्रह्मास्मि' इत्यविभागेनैवानुभवति ॥

---

१. शारी. ४-४-८ ॥—२. शारी. २-१-२२ ॥—३. शारी. ३-४-८ ॥—४. शारी. ४-१-३ ॥—५. बृ. ५.७-२२. मा ॥—६. छा. ६-८-७ ॥—७. मु. ३-१-३ ॥—८. तै. आन. १-२ ॥—९. गी. १४-२ ॥—१०. छा. ३-१४-१ ॥—११. बृ. ५-७-३ ॥

सूत्रार्थस्तु—'अहं ब्रह्मास्मि' इत्यविभागेनैव ब्रह्मानुभवति मुक्तः, स्वात्मनोऽप्यात्मतयोपासनेन यथावस्थितपरमात्मात्मकस्वरूपस्य दृष्टत्वात्। साधर्म्यश्रुतिस्तु परमात्मशरीरभूतस्य प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणैस्तत्साधर्म्यं प्रतिपादयति। [1]"सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात्स्वात्मभूतेन ब्रह्मणा सह तद्गुणाननुभवतीति वदति। काम्यन्ते इति कामाः-कल्याणगुणाः, कल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः॥ ४॥

इति वेदान्तदीपे अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

---

(श्रीशारीरकमीमांसाभाष्ये ब्राह्माधिकरणम् ॥ ३ ॥)

---

# ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । ४ । ४ । ५ ॥

प्रत्यगात्मनः परं ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमाविर्भवति; तत्स्वरूपं श्रुतिवैविध्याद्विचार्यते । किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति, उत विज्ञानमात्रमेवेति तेन रूपेण, अथोभयोरविरोध इत्युभयरूपेणेति । किं तावत्प्राप्तम्? ब्राह्मेणेति जैमिनिराचार्यो मन्यते। ब्राह्मेण—अपहतपाप्मत्वादिनेत्यर्थः। अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः । ब्राह्मेणेति कुतोऽवगम्यते? उपन्यासादिभ्यः; उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये [2]"य आत्माऽपहतपाप्मा" इत्यादिना [2]"सत्यसङ्कल्पः" इत्यन्तेन । आदिशब्देन सत्यसङ्कल्पत्वादिगुणायत्ता जक्षणादयः [3]"जक्षत्क्रीडन्रममाणः" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते । अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न सम्भवतीति जैमिनेर्मतम् ॥ ५ ॥

---

१. तै. आन. १-२ ॥—२. छा. ८-७-१ ॥—३. छा. ८-१२-३ ॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । ४ । ४ । ६ ॥

[1]चैतन्यमात्रमेवास्य स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते । कुतः ? तदात्मकत्वात्—तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः । [2]"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [3]"विज्ञानघन एव" इत्यवधारणात् विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोऽस्य गुणान्तराभावात् [4]"अपहतपाप्मा" इत्यादयः शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चिति तन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥

सम्प्रति भगवान् बादरायणः स्वमतेन सिद्धान्तमाह—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः । ४ । ४ । ७ ॥

एवमपि—विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते । कुतः ? उपन्यासात्पूर्वभावात्—औपनिषदात् [4]"य आत्माऽपहतपाप्मा" इत्याद्युपन्यासात्प्रमाणात् पूर्वेषाम्-अपहतपाप्मत्वसत्यकामत्वादीनामपि भावात्—विद्यमानत्वात् । तुल्यप्रमाणकानामितरेतरबाधो न युज्यत इत्यर्थः । नच वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम्, विशेषाभावात् 'विपरीतं कस्मान्न भवति' इति न्यायात् । तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम् । एवमप्यविरोध इत्यभ्युपगम्य वदन् ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किञ्चिदस्तीत्ययमर्थः [3]"वि-

१. चैतन्यमात्रमेवात्मनः. पा॥—२. बृ. ६-५-१३॥—३. बृ. ४-४-१२॥—४. छा. ८-७-१॥

ज्ञानघन एव" इत्यादिभिर्न प्रतिपाद्यत इति मन्यते । कस्तर्हि १"विज्ञानघन एव" इत्यवधारणस्यार्थः? कृत्स्नोऽप्यात्मा जडव्यावृत्तस्वप्रकाशः; नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः २"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति । नचैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो विरुध्यते; यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते । इदमत्र वाक्यतात्पर्यं—यथा रसवत्स्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वम्; तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशस्वरूपत्वमित्यर्थः ॥ ७ ॥

इति श्रीशारीरकमीमांसाभाष्ये ब्राह्माधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ अस्य स्वरूपाविर्भावः ब्राह्मेण-अपहतपाप्मत्वादिगुणकस्वरूपेण ; ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविका गुणा इति ३"य आत्माऽपहतपाप्मा" इत्यारभ्य उपन्यासादिभ्यः अवगम्यते ; त एव ४" जक्षत्क्रीडन् रममाणः " इत्यादिनोच्यन्ते । इति जैमिनेर्मतम् ॥ ५ ॥

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ १"विज्ञानघन एव" इत्यवधारणात् विज्ञानमात्र*स्वरूप इत्यौडुलोमिः ॥ ६ ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ १"विज्ञानघन एव" इति स्वप्रकाशस्वात्मस्वरूप इत्यवगतेऽपि ३"य आत्माऽपहतपाप्मा" इत्युपन्यासादिना पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावावगमादुभयश्रुत्यवगतोभयस्वरूपस्य परस्परविरोधाभावाद्रूपद्वयं नान्योन्यपरिहारीत्युभयरूपसमुच्चयं भगवान् बादरायणो मेने ॥ ७ ॥

इति वेदान्तसारे ब्राह्माधिकरणम् ॥ ३ ॥

---

१.बृ. ४-४-१२॥ २.बृ ६-५-१३॥ ३.छा. ८-७-१॥ ४.छा. ८-१२-३॥ *स्वरूपेण-पा॥

वेदान्तदीपे—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ किं जीवस्य स्वाभाविकं रूपमपहतपाप्मत्वादिगुणकम्, उत चैतन्यमात्रम्, उतोभयमिति संशयः। अपहतपाप्मत्वादिगुणकमिति प्रथमः पक्षः, १ "य आत्माऽपहतपाप्मा" इति प्रतिपादनात्। चैतन्यमात्रमिति द्वितीयः पक्षः, २ "एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ३ "विज्ञानघन एव" इत्यवधारणात्। राद्धान्तस्तु—ज्ञानस्वरूपस्यैवापहतपाप्मत्वादिगुणकत्वप्रतिपादनादविरोधाच्चोभयं स्वरूपम्। न च "विज्ञानघन एव" इत्यवधारणं गुणान्तरासहम्, यथा सैन्धवघनस्य "रसघन एव" इत्यवधारणेऽपि रसाश्रयद्रव्यं रूपस्पर्शादिगुणान्तरं च सहते; "रसघन एव" इत्यवधारणं तु रसवद्द्रव्यान्तरस्वभावव्यावृत्तिपरम्; द्रव्यान्तराणां हि स्वैकदेशे ४रसवत्त्वम्, सैन्धवघनस्य तु ५सर्वत्र; एवमत्रापि जडवस्तुव्यावृत्तस्वस्वभावस्य सगुणस्याऽऽत्मनः स्वप्रकाशतावधारणं "विज्ञानघन एव" इति क्रियते ॥

सूत्रार्थस्तु—ब्राह्मेण-अपहतपाप्मत्वादिना स्वरूपाविर्भावः। अपहतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाश्श्रुताः। उपन्यासादिभ्यः-तेषां ब्रह्मगुणानां प्रत्यगात्मन्यपि १ "य आत्माऽपहतपाप्मा" इत्यादिनोपन्यासात्। आदिशब्दात् ६ "जक्षत्क्रीडन्रममाणः" इत्यादिभ्योऽपि सत्यसङ्कल्पत्वादयोऽवगम्यन्त इति जैमिनिराचार्यो मन्यते ॥ ५ ॥

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ चैतन्यमात्रेण स्वरूपाविर्भावः, ३ "विज्ञानघन एव" इति तदात्मकत्वावधारणादित्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ एवं—विज्ञानस्वरूपस्यैव, स्वप्रकाशस्वरूपस्यैव पूर्वेषाम्—अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तानामपि १ "य आत्माऽपहतपाप्मा" इत्युपन्यासात्सद्भावावगमादुभयोस्स्वरूपयोरविरोधं भगवान्बादरायणो मन्यते। उभयश्रुत्यवगतस्येतरेतरविरोधाभावान्नान्यतरबाधे प्रमाणमस्तीत्यभिप्रायः ॥ ७ ॥

इति वेदान्तदीपे ब्राह्माधिकरणम् ॥ ३ ॥

---

१. छा. ८-७-१ ॥—२. बृ. ६-५-१३ ॥—३. बृ. ४-४-१२ ॥— ४. मिश्ररसवत्त्वम्. पा ॥—५. सर्वत्रैकरसवत्त्वम्. प ॥—६. छा. ८-१२-३ ॥

## संकल्पादेव तच्छ्रुतेः । ४ । ४ । ८ ॥

मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम्; तमधिकृत्य सत्यसङ्कल्पत्वप्रयुक्ता व्यवहाराः श्रूयन्ते [१]"स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवतीति विशये; लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षा—

(सिद्धान्तः)

इति प्राप्त उच्यते—सङ्कल्पादेव—इति । कुतः? तच्छ्रुतेः [२]"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । नच प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते; येनास्य "सङ्कल्पादेव" इत्यवधारणस्य [३]"विज्ञानघन एव" इतिवद्व्यवस्थापनं क्रियते ॥ ८ ॥

## अत एव चानन्याधिपतिः । ४ । ४ । ९ ॥

यतो मुक्तस्सत्यसङ्कल्पः; अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतस्सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव [४]"स स्वराडभवति" इत्युच्यते ॥ ९ ॥

इति श्रीशारीरकमीमांसाभाष्ये सङ्कल्पाधिकरणम् ॥ ४ ॥

१. छा. ८-१२-३ ॥—२. छा. ८-२-१॥—३. बृ. ४-४-१२॥—४. छा. ७ २५-२॥

वेदान्तसारे—सङ्कल्पादेव तच्छ्रुतेः ॥ १"स यदि पितृलोककामः" इत्यादिनाऽवगताः पित्रादयः १"सङ्कल्पादेवास्य" इति श्रुतेः सङ्कल्पादेव भवन्ति। यथा परमपुरुषस्य लीलाप्रवृत्तस्य दशरथवसुदेवादयस्सङ्कल्पादेव भवन्ति; एवमेव परमपुरुषलीलान्तर्गतस्य मुक्तस्यापि तदुपकरणभूताः पित्रादयस्सङ्कल्पादेव भवन्तीत्यर्थः ॥ ८ ॥

अत एव चानन्याधिपतिः॥अत एव २ "अपहतपाप्मा...सत्यसङ्कल्पः" इत्यादिश्रुतेः न कदाचिदपि कर्माधीनोऽयम् ॥ ९ ॥

इति वेदान्तसारे सङ्कल्पाधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—सङ्कल्पादेव तच्छ्रुतेः ॥ ३"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इत्यादिराम्नायते। किमेते ज्ञात्यादयो मुक्तस्य सङ्कल्पादेव भवन्ति, उत प्रयत्नान्तरसव्यपेक्षात्सङ्कल्पादिति संशयः। लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि कार्ये प्रयत्नान्तरसापेक्षत्वदर्शनान्मुक्तस्यापि तथैव सापेक्षादिति पूर्वः पक्षः "सङ्कल्पादेव" इत्यवधारणं ४ "विज्ञानघन एव" इतिवद्भविष्यति। राद्धान्तस्तु २"सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इत्यवधारणान्नान्यापेक्षत्वम्। नचेह सत्यकामत्वाद्युपन्यासवत् मुक्तस्यान्यापेक्षत्वे प्रमाणमस्ति। लोके सत्यसङ्कल्पत्वाभावादेव प्रयत्नान्तरापेक्षत्वम्; नहि परमपुरुषव्यतिरिक्तः कश्चित्सत्यसङ्कल्पोऽस्ति। मुक्तश्च तत्प्रसादात्तत्साम्यमुपगतस्तथैव। सूत्रमपि व्याख्यातम् ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ अतः-श्रुतेरेव मुक्तोऽनन्याधिपतिश्च। अन्याधिपतित्वं-कर्माधीनत्वम्। २ "अपहतपाप्मा सत्यसङ्कल्पः" इति श्रूयते; अतोऽनन्याधिपतिः ॥ ९ ॥

इति वेदान्तदीपे सङ्कल्पाधिकरणम् ॥ ४ ॥

---

१. छा. ८-२-१ ॥—२. छा. ८-७-१ ॥—३. छा. ८-१२-२,३ ॥—४. बृ. ४-४-१३ ॥

## अभावं बादरिराह ह्येवम् । ४ । ४ । १० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्तिचेति विशये—शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते; कुतः? आह ह्येवं—[१]"नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसम्बन्धे दुःखस्यावर्जनीयत्वमभिधाय [१]"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् । ४ । ४ । ११ ॥

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते, कुतः? विकल्पामननात्—विविधः कल्पो विकल्पः, वैविध्यमित्यर्थः, [२]"स एकधा भवति त्रिधा भवति, पञ्चधा सप्तधा" इत्यादिश्रुतेः। आत्मन एकस्यानेकधाभावासम्भवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते। अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम्; तदेव हि शरीरं प्रियाप्रियहेतुः ॥ ११ ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

## द्वादशाहवदुभयविधं बादरायणोऽतः ।४।४। १२॥

'सङ्कल्पादेव' इत्येतदतश्शब्देन परामृश्यते; अत एव सङ्कल्पात्, उभयविधं सशरीरमशरीरं च मुक्तं भगवान् बादरायणो मन्यते; एवञ्चो-

१. छा. ८-१२-१,२॥—२. छा. ७-२६-२ ॥

भयी श्रुतिरुपपद्यते ; द्वादशाहवत्—यथा [1]"द्वादशाहमृद्धिकामा उपेयुः" [2]"द्वादशाहेन प्रजाकामं याजयेत्" इत्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति ॥ १२ ॥

यदा शरीराद्युपकरणवत्त्वम् ; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

## तन्वभावे सन्ध्यवदुपपत्तेः । ४ । ४ । १३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने [3]" अथ रथान् रथयोगान् पथस्सृजते " इत्यारभ्य [3]" अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति [4]"य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इति ईश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते; तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

## भावे जाग्रद्वत् । ४ । ४ । १४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तोऽपि लीलारसं भुङ्क्ते; परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते ; तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित् ; कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात्परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम् ; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—

---

१ ॥—२ ॥—३. बृ. ६-३-१० ॥—४. कठ. २-५-८

## प्रदीपवदावेशस्तथाहि दर्शयति । ४ । ४ । १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः; तथाऽऽत्मनोऽप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः; यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देह आत्माभिमानः, तद्वत्। इयान्विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेषु आत्माभिनानुगुणा व्याप्तिर्न सम्भवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः 'इदम्' इति ग्रहणानुगुणा च नानुपपन्ना। तथाहि दर्शयति [१] "वालाग्रशत भागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पते" इति। अमुक्तस्य कर्म नियामकम्; मुक्तस्य तु स्वेच्छेति विशेषः॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः [२] "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति; तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते? तत्रोत्तरं—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । ४ । ४ । १६ ॥

नेदं वचनं मुक्तविषयम्; अपितु स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्। स्वाप्ययः—सुषुप्तिः; सम्पत्तिश्च—मरणम्, [३] "वाङ्मनसि सम्पद्यते" इत्यारभ्य [३] "तेजः परस्यां देवतायाम्" इति वचनात्। तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निस्सम्बोधत्वं च विद्येते। अतस्तयोरन्यतरापेक्षमिदं वचनम्। सुषुप्तिमरणयोर्निस्सम्बोधत्वं, मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या [४] "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति सुषुप्तिवेलायां

१. श्वे. ५-अ, ९ ॥—२. बृ. ६-३-२१ ॥—३. छा. ६-८-६॥—४. छा. ८-११-२ ॥

निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य १"स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते । तथा २"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते।तथा मरणे च निस्सम्बोधत्वम् ३"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति" इत्युक्तम् । विनश्यति— नपश्यतीत्यर्थः । अतः ४"प्राज्ञेनाऽत्मना" इति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥ १६ ॥

इति श्रीशारीरकमीमांसाभाष्ये अभावाधिकरणम् ॥ १० ॥

---

वेदान्तसारे—अभावं बादरिराह ह्येवम् ॥ तस्य देहेन्द्रियाद्युपकरणाभावं बादरिर्मेने ५"नह वै सशरीरस्य" इत्यादिर्हि तदभावमाह ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ २"एकधा भवति" इत्यादिना देहेन्द्रियादिभिर्विविधताश्रुतेः देहाद्युपकरणसद्भावं जैमिनिर्मेने ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ उभयश्रुतेस्सशरीरत्वमशरीरत्वञ्चेच्छातः; यथा द्वादशाहे उभयश्रुतेस्सत्रमहीनञ्च भवति ॥ १२ ॥

तन्वभावे सन्ध्यवदुपपत्तेः ॥ स्वेनैव सृष्टतन्वाद्यभावे स्वप्ने ६"अथ रथान् रथयोगान् पथस्सृजते" इति परमपुरुषसृष्टभोगवत् मुक्तोऽपि परमपुरुषसृष्टैरेव लीलारसं भुङ्क्ते ॥ १३ ॥

भावे जाग्रद्वत् ॥ स्वेनैव सृष्टोपकरणभावे जाग्रत्पुरुषवत् भुङ्क्ते ॥ १४ ॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ एकदेशस्थितस्यापि स्वप्रभारूपज्ञानव्याप्त्या सर्वानुभवस्सिद्ध्यति । ७"वालाग्रशतभागस्य" इत्यारभ्य ७"स चानन्त्याय कल्पते" इति हि दर्शयति ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४"प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षमित्युक्तम् । ८"ना ह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहम

---

१. छा. ८-१२-५ ॥—२. छा. ७-२६-२ ॥— ३. बृ. ४-४-१२ ॥ —४. बृ. ६-३-२१॥— ५. छा. ८-१२, १ ॥— ६. बृ. ६-३-१० ॥—७. श्वे. ५-अ. ९ ॥— ८. छा. ८-११-२ ॥

स्मीति" इत्यादिना सुषुप्तप्रायादावकिञ्चिज्ज्ञत्वमाविष्कृतं हि ॥ १६ ॥
इति वेदान्तसारे अभावाधिकरणम् ॥ ५ ॥

---

वेदान्तदीपे—अभावं बादरिराह ह्येवम् ॥ किं मुक्तस्य शरीरेन्द्रियाद्यस्ति? उत न? अथ यथासङ्कल्पमस्तिच नेति च संशयः। १"नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति मुक्तस्याशरीरत्वश्रवणान्नास्त्येवेत्येकः पक्षः। २"स एकधा भवति त्रिधा भवति" इति सशरीरत्वश्रुतेः अशरीरत्वश्रुतिः कर्मगृहीतशरीरविषयेति शरीरेन्द्रियाद्यस्त्येवेति द्वितीयः पक्षः। राद्धान्तस्तु—३"मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इत्यशरीरस्यैव भोगश्रुतेः २"स एकधा भवति त्रिधा भवति" इतिश्रुतेश्च यथासङ्कल्पमस्ति च न चेति। सूत्रार्थस्तु-शरीराभावं बादरिर्मेने; एवमाहहि श्रुतिः १"अशरीरं वाव सन्तम्" इति ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ शरीरादिभावं जैमिनिर्मेने; कुतः? विकल्पामननात्-विविधः कल्पः-विकल्पः; २"स एकधा भवति त्रिधा भवति" इत्यादिना मुक्तस्य हि विविधकल्पनमाम्नायते; आत्मन एकरूपस्याच्छेद्यस्य वैविध्यासम्भवाच्छरीरद्वारेणैव हि विज्ञायते वैविध्यम् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ अतः उभयश्रुतेरिच्छातः, उभयविधम्, शरीरवत्त्वमशरीरत्वं च भगवान्बादरायणो मेने; द्वादशाहवत्—यथा द्वादशाह उभयश्रुतेस्सत्रमहीनंच; ४"द्वादशाहमृद्धिकामा उपेयुः" इति सत्रं भवति, ५"द्वादशाहेन प्रजाकामं याजयेत्" इत्यहीनम् ॥ १२ ॥

तन्वभावे सन्ध्यवदुपपत्तेः ॥ स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेस्सत्यसङ्कल्पोऽपि स्वयं न सृजति; सन्ध्यवत्-यथा स्वप्ने ६"अथ रथान्" इत्यारभ्य ६"स हि कर्ता" इति ७"य एष सुप्तेषु" इत्यारभ्य ७"तदु नात्येति कश्चन" इतिचेश्वरसृष्टैरुपकरणैर्जीवो भुङ्क्ते; तथा मुक्तोऽपि-लीलाप्रवृत्तेश्वरसृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

भावे जाग्रद्वत् ॥ स्वसङ्कल्पसृष्टतनुप्रभृत्युपकरणसद्भावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते; परमपुरुषोऽपि दशरथवसुदेवादिपितृलोकादि-

---

१. छा. ८-१२-१ ॥—२. छा. ७-२६-२ ॥—३. छा. ८-१२-५ ॥—४ ॥—५ ॥—६. छा. ६-३-१० ॥—७. कठ. २-५-८ ॥

कमात्मनस्सृष्ट्वा तैर्मनुष्यधर्मैर्लीलारसं भुङ्क्ते; तथा मुक्तश्च सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृष्ट्वा तैर्लीलारसमनुभवति ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—

प्रदीपवदावेशस्तथाहि दर्शयति ॥ यथा प्रदीपस्यैकस्यैकदेशवर्तिनस्स्वया प्रभयाऽनेकदेशप्रवेशः; तद्वदात्मनोऽप्येकदेशस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिस्सम्भवति; यथैकस्मिन्देहे हृदयादिदेशे वर्तमानस्याणोरपि सर्वस्मिन्देहे अहम्' इत्यभिमानानुगुणव्याप्तिस्स्वप्रभारूपचैतन्येन, तद्वत्। तथा दर्शयति हि श्रुतिः१"वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पते" इति।प्रत्यगात्मनोऽणुत्वमेव स्वरूपमिति सूत्रकारमतम्, २"नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्" इति परस्यैव महत्त्ववचनात् ॥ १५ ॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः३"प्राज्ञेनाऽऽत्मनाऽऽपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति; तत्कथं मुक्तस्य ज्ञानानन्त्यमुच्यत इत्यत्राह—

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ नेदं मुक्तविषयम्; सुषुप्तिमरणयोरन्यतरापेक्षम्। आविष्कृतं हि श्रुत्या सुषुप्तिमरणयोर्निस्सम्बोधत्वम्, मोक्षदशायां सर्वज्ञत्वं च। सुषुप्तौ तावत् ४"ना ह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति। विनाशम्-अदर्शनमित्यर्थः। मरणे च ५"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति" इति। विनश्यति—न पश्यतीत्यर्थः। मोक्षे तु ६"स वा एष दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इति; ७"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च ॥ १६ ॥

इति वेदान्तदीपे अभावाधिकरणम् ॥ ५ ॥

———

१. श्वे. ५-अ. ९ ॥—२. शारी. २-३-२२ ॥— ३. बृ. ६-३-२१ ॥— ४. छा. ८-११-२ ॥—५. बृ. ४-४-१२ ॥—६. छा. ८-१२-५ ॥—७. छा. ७-२६-२ ॥

# जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । ४ । ४ । १७ ॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः॥ किं युक्तम्? जगदीश्वरत्वमपीति । कुतः? [1]"निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च । नहि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगन्नियमनेन विनोपपद्येते । अतस्सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति ॥

( सिद्धान्तः )

एवं प्राप्ते प्रचक्ष्महे—जगद्व्यापारवर्जम्-इति। जगद्व्यापारः—निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम् । तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम्। कुतः? प्रकरणात्—निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याऽम्नायते [2]"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते; असाधारणस्य हि लक्षणत्वम् । तथा [3]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [4]"ब्रह्म वा इदमेकमेवाग्र आसीत् तदेकं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति"

---

१. मु. ३-१-३ ॥—२. तै. भृगु. १-अनु ॥—३. छा. ६-२-१ ॥—४. बृ. ३-४-११ ॥

१"आत्मा वा इदमेकएवाग्र आसीत् नान्यत्किंचन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत" २"एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमेत तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु । ३"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य ४"य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते।असन्निहितत्वाच्च—नचैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति; येन जगद्व्यापारस्तस्यापि स्यात्॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः । ४ । ४ । १८ ॥

५"स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" ६"इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" इति प्रत्यक्षेण—श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते; अतो न जगद्व्यापारवर्जमिति चेत्—तन्न, आधिकारिकमण्डलस्थोक्तेः; आधिकारिकाः-अधिकारेषु नियुक्ता हिरण्यगर्भादयः; मण्डलानि-तेषां लोकाः;तत्स्थाः-भोगाः मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः ५"तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिनोच्यते । अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थान् सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातमल्पं च स्यात्; तत्राह—

---

१. ऐत. १-१ ॥— २. महो. १-अ १ ॥ — ३. बृ. ५-७-३ ॥ —४. शतपथ. १४-५-३० ॥—५. छा. ७-२५-२ ॥—६. तै. भृगु. १०-५ ॥

## विकारावर्ति च तथाहि स्थितमाह। ४। ४। १९॥

विकारे—जन्मादिके न वर्तत इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं, निरतिशयानन्दं, परं ब्रह्म, सविभूतिकं, सकलकल्याणगुणमनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्। तथाहि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः—[१]"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" [१]"रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका। तद्विभूतिभूतं च जगत्तत्रैव वर्तते [२]"तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इति श्रुतेः। अतस्सविभूतिकं ब्रह्मानुभवन्विकारान्तर्वर्तिनः आधिकारिकण्डलस्थानपि भोगान् भुङ्क्त इति [३]"सर्वेषु लोकेषु कामचारः" इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः॥ १९॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने। ४। ४। २०॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम्; निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती—[४]"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति [५]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि; तथा [६]"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति

---

१. तै. आन. ७-२, १॥—२. कठ. २-५-८॥—३. छा. ७-२५-२॥—४. तै. आन. ८-१॥—५. बृ. ५-८-९॥—६. बृ. ६-४.२२॥

च श्रुतिः । स्मृतिरपि [1]"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते"इति, [2]"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः [3]" एष ह्येवानन्दयाति" [4]"मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते। ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्यच " इति । यद्यप्यपहतपाप्मत्वादिस्सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः, तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम्;तस्य नित्यस्थितिश्च तदायत्ता; परमपुरुषस्यैतन्नित्यतायाः नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च जगद्व्यापारवर्जम् ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ । २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गाज्जगद्व्यापारवर्जमित्यवगम्यते [5]" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्ति[6]सम्भवाशङ्केत्यत्राह—

१. गी. ९ १० ॥—२. गी. १०-४२ ॥—३. तै. आन. ७-२१ ॥ —४. गी. १४-२६,२७ ॥—५. तै. आन. १-२ ॥—६. सम्भावनाशङ्के. पा ॥

## अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । ४ । ४ । २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणस्सर्वज्ञस्सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते; एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च [१]"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते" इत्यादिकः। तथा च भगवता स्वयमेवोक्तं [२]"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते " इति । नचोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्थारम्भाद्यसम्भवात्पुनरावृत्तिशङ्का । न च परमपुरुषस्सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति; य एवमाह— [३]"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्॥आस्थितस्सहि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" इति। सूत्राभ्यासश्शास्त्रपरिसमाप्तिं द्योतयति । इति सर्वं समञ्जसम् ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

---

१. छा. ८-१५-१ ॥— २. गी. ८-१५,१६ ॥—३. गी. ७-१७,१८,१९ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चाध्यायः ॥ ४ ॥
शास्त्रं च परिसमाप्तम् ॥

---

अविस्तृतास्सुगम्भीरा रामानुजमुनेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥

---

श्रीमते रामानुजाय नमः.

---

**वेदान्तसारे—जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥** अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तं मुक्तस्य जगज्जन्मादिकारणत्ववर्जम्; [1]"यतो वा इमानि भूतानि जायन्ते" इत्यारभ्य [1]"तद्ब्रह्म" इत्यादि जगत्सृष्ट्यादि परस्यैवेति प्रकरणादवगम्यते; सृष्ट्यादिप्रकरणेषु मुक्तस्यासन्निहितत्वाच्च। मुक्तस्यातिरोहितस्वमाहात्म्यस्यानवधिकातिशयानन्दपरिपूर्णब्रह्मानुभव एव । ब्रह्मणोऽपि जगद्व्यापारो लीलामात्रमिति [2]"लोकवत्तु लीलाकैवल्यम्" इत्युक्तम् ॥

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः॥** [3]"इमाल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्युपदेशाज्जगद्व्यापारोऽस्तीति चेत्—न, हिरण्यगर्भाद्याधिकारिकमण्डलस्थभोगोक्तेः । नहि तत्र नियमनं श्रुतम् ॥ १८ ॥

**विकारावर्ति च तथाहि स्थितिमाह ॥** विकारासंसृष्टपरिपूर्णपरब्रह्मानुभव एव तस्य सुखम्; तथाऽस्य स्थितिं [4]"रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्याह ॥ १९ ॥

---

१. त. भृगु. १ अनु॥— २. शारी. २-१-३३॥ — ३. भृगु. १०-५॥— ४. तै. आन. ७-१ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ उक्तमर्थं श्रुतिस्मृती च दर्शयतः १"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" २"एतस्य वा अक्षरस्य प्रशासने" इत्यादिका श्रुतिः; स्मृतिरपि ३"अहं सर्वस्य प्रभवः मत्तस्सर्वं प्रवर्तते" इति॥

भोगमात्रसाम्यलिङ्गाच्च ॥ १"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मानुभवरूपभोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥४"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इतिशब्दात् निवृत्तसमस्ततिरोधानः आविर्भूतापहतपाप्मत्वादिगुणगणः अनवधिकातिशयानन्दं परं ब्रह्मानुभवति, न च पुनरावर्तते इति निश्चीयते इति । सर्वं समञ्जसम् ॥२२ ॥

इति वेदान्तसारे जगद्व्यापारवर्जाधिकरणम् ॥ ९ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चाध्यायः ॥४ ॥

---

श्रीमते रामानुजाय नमः.

---

वेदान्तदीपे—जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ किं मुक्तस्य भोगः निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभव एव ? उत जगत्सृष्ट्यादिजगन्नियमनरूपलीलाऽपीति संशयः । ५" निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेर्जगन्नियमनरूपलीलापीति पूर्वः पक्षः । राद्धान्तस्तु—६"यतो वा इमानि भूतानि जायन्ते" ७"सदेव सोम्येदमग्र आसीत्"८"ब्रह्म वा इदमेक एवाग्र आसीत्" ९"आत्मा वा इदमेक एवाग्र आसीत्" १०"एको ह वै नारायण आसीत्"इत्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारश्श्रूयते । तत्रतत्र प्रकरणे न मुक्तस्य

---

१ तै. आन. १-२ ॥—२. बृ. ५-८ ९॥—३. गी. १०-८॥—४. छा. ८-१५-१ ॥—५. मु. ३-१-३ ॥—६. तै. भृगु. १ ॥—७. छा. ६-२-१ ॥—८. बृ. ३-४-१० ॥—९. ऐत. १-१ ॥—१०. महो. १-९ ॥

(अथ सम्बन्धाधिकरणम् ॥ ७ ॥)

अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदा-
देकं स्यात्तेन नाम्नोरनियतिरिति न स्थानतो रूपभेदात् ।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति न चेत् स्यान्नरूपातिदेश-
स्तस्मादक्ष्यक्षियोगादहरहमिति तन्नामनी स्थापनीये ॥ २४

(अथ सम्भृत्यधिकरणम् ॥ ८ ॥)

सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतस्सर्वविद्या-
स्वन्वीयेतेति चेन्न क्वचिदगतिकतो लिङ्गतस्स्थापितत्वात् ।
अल्पस्थानासु विद्यास्वघटितवपुषस्स्वोचितस्थानवृत्ते-
र्द्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानिनोऽन्ये ॥ २५

(अथ पुरुषविद्याधिकरणम् ॥ ९ ॥)

आख्याद्यैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तं
यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात्तैत्तिरीये परभजनफलम्मुक्तिरत्राप्यनुक्ता
छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥ २६
स्पष्टे रूपादिभेदे हठसमुपनतो नामसाम्यादिमात्रात्
पुंविद्यापूर्वपक्षो मृदुरिति विफलाऽधिक्रियैषेति चेन्न ।
अन्यैव न्यासविद्या प्रकरणपठिता तद्विधानप्रधाने
त्यस्वातन्त्र्यादिसिद्ध्यै विभजनमनयोरित्यतीवार्थवत्त्वात् ॥ २७
यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे
यज्ञस्यानङ्गभूतं कथमिह विविधं कल्प्यते तत्र तत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथाऽन्ये
तिष्ठत्वेतद्द्विधापि प्रकृतसुघटिता सम्प्रदायस्तु चिन्त्यः ॥ २८

( अथ वेधाद्यधिकरणम् ॥ १० ॥ )

युज्येरन् ब्रह्मविद्यापरिसरपठिताश्शं न इत्यादिमन्त्राः
तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात् ।
नो चेदन्येऽपि तद्वत् सविधपठनतस्सन्तु शुक्रं प्रविध्ये-
त्येवंप्रायास्तदर्था न च घटत इदं लिङ्गतो दुर्बलत्वात् ॥ २९

( अथ हान्यधिकरणम् ॥ ११ ॥ )

शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणं
ब्रूतेऽन्या तत्प्रवेशं प्रियतदितरयोर्दायसंक्रान्तिकाले ।
हानं चोपायनं च क्वचिदिति पृथगाम्नातसंपर्कसिद्धि-
र्वाक्यं शाखान्तरस्थम्भवति हि विविधाकाङ्क्षया वाक्यशेषः॥ ३०
इत्थं ब्रह्मज्ञकर्मत्यजनमितरसङ्क्रान्तिसम्पृक्तमस्तु
स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् कॢप्तिदौस्स्थ्यात् ।
सर्वेषाम्मुक्तिभाजां द्वितयमपि यथोपास्ति साध्यं समानं
तच्चिन्तासौ तथा तन्महिमिवद इति स्थापनीयोभयत्र ॥ ३१
कर्ता तेनैव भोग्यं शुभमितरदिति स्थापितं कर्मकाण्डे
तस्माद्ब्रह्मज्ञकर्म द्विषति सुहृदि वा नापतेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद्विगलति विदुषः कर्म तत्साध्यतुल्यं
विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः ॥ ३२

( अथ साम्परायाधिकरणम् ॥ १२ ॥ )

कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिषदि श्रूयते साम्पराये
मार्गेऽन्यस्यां द्विधैवं शकलश इह तच्चिन्तनं चास्तु मा भूत् ।
नह्युक्तं कर्मसाध्यं पथि फलमथ गत्यर्थदेहानुवृत्ति
मुक्त्यै विद्यैव कुर्यादघहतिवचने पाठतोऽर्थो बली च ॥ ३३
निश्शेषं कर्म नश्येदिह यदि विदुषस्स्थूलदेहान्तमात्रे
विश्राम्येत्तस्य तावच्चिरमिति हि वचो नार्थवत्त्वं गतेस्स्यात् ।

गत्वा सम्पद्य चाविर्भवनमिति न सम्बोभवीतीत्ययुक्तं
स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतस्सूक्ष्मसंस्कारयोगः ॥ ३४

( अथानियमाधिकरणम् ॥ १३ ॥ )

पन्थास्स्यादर्चिरादिः फलमिह निखिलब्रह्मविद्यासु मा वा
प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न ।
सर्वासां तद्य इत्थं विदुरिति वचसाऽथात्र येचेति चोक्त्या
मार्गे साधारणेऽस्मिंस्तदनुसरणतस्तद्वदेवास्य चिन्ता ॥ ३५
हेयोपादेयमार्गद्वितयमुपदिशन्मुक्तिदाता मुमुक्षो-
र्योगी यःकश्चनैतत्सरणियुगलविन्मुह्यते नेत्यगायत् ।
तस्मादस्मादृशाधीत्यविशदविशदीकर्तृवाक्यावमर्शात्
ब्रह्मप्राप्त्यर्हकृत्स्नप्रणिहितघटितं मार्गचिन्ताविधानम् ॥ ३६
हानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारै-
र्विद्याङ्गत्वादिसिद्ध्यै यदि भवतु तदाऽनन्तरे पाद एतत् ।
मैवं विद्याङ्गतायामपि भजनमिवेदं च धीत्वाविशेषात्
कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति ॥ ३७

( अथाक्षरध्यधिकरणम् ॥ १४ ॥ )

यस्यामस्थूलतादिः प्रपठित उचितं चिन्तनं तस्य तस्यां
नान्यस्याम्मानहानेर्न यदि नियमनं कस्य कुत्रेतिचेन्न ।
हेतुत्वोऽभयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥ ३८
सत्यत्वाद्यैस्स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या
भूयस्तत्तुल्यधर्मेष्वधिकरणमिदं स्याद्वृथैवेति चेन्न ।
कैश्चिज्ज्ञातस्वरूपे क्वचिदितरगतं किंचिदन्यन्निषेध्यं
व्यावृत्त्या न स्वरूपावगतिरत इति प्रेक्षणस्यात्र रोधात् ॥ ३९

व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तन्ततस्त-
च्चिन्ता किंचिज्ज्ञसाद्धया जलधितरणवन्नोपदिश्येत मैवम्।
तत्तत्सामान्यधर्मानुगमकबलिताशेषभेदोपदेशे
तादृक्चिन्तोपपत्तेरनवममिति वा गृह्यतां संगृहीतिः ॥ ४०

(अथान्तरत्वाधिकरणम् ॥ १५ ॥)

सूत्रस्वारस्यलाभात् प्रथममसुभृतः पूर्वपक्षे निवेशः
सिद्धान्ते ब्रह्मणश्चेत्यधिकरणगतिस्तोकशङ्कापनुत्त्यै।
साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्या-
दित्यालोच्याथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः ॥ ४१
यत् साक्षादित्यमुष्मिञ्श्रुतिशिरसि परं ब्रह्म वेद्यं यदेवे-
त्येतस्मिश्चास्त्वथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति।
विद्याभित्प्रष्टृभेदोऽप्ययमिति यदि नानूद्य भूयोऽनुयोगात्
पश्चादुक्तश्च दोषात्यय इह न भिदां सौति साधारणत्वात् ॥ ४२
सद्विद्यायां यथा हि प्रतिवचनभिदा प्रश्नभेदानुसारा-
द्विद्यैकत्वे विशेष्यं प्रकटयति परान्देवतामेव तत्र।
तेनोषस्त्यः कहोलश्रुतमपि स च तत्संश्रुतं संकलय्य
ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत्तत्र सब्रह्मचर्यम् ॥ ४३

(अथ कामाद्यधिकरणम् ॥ १६ ॥)

आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या
भिद्येतात्रेति चेन्न द्विविध इह यतो ब्रह्मनिर्देश एषः।
सर्वाधारत्वपूर्वैः परतरविषयस्सामगाकाशशब्दो
विश्वेशाधारतोक्त्या सुषिरविषयताऽन्यत्र रूपन्तु नान्यत् ॥ ४४
छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टं
तच्चान्येषां वशित्वप्रभृतिघटितमित्यस्तु रूपस्य भेदः।
मैवं यत्तद्वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः.

इत्यैकार्थ्यं निरूढं परमपि दहरोपासनन्तद्द्वयम् ॥ ४५
नन्वाकाशो गुणाद्यैः परइतिदहराधिक्रियायां पुरोक्तं
तस्मान्नान्यार्थशङ्केत्यधिकरणमिदं नोज्जिहीतेति चेन्न ।
व्योमातीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः
पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमिताश्छिन्नमूलत्वमत्र ॥ ४६

(अथ तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥)

उद्गीथादौ क्रियाङ्गे भजनमपि भवेत् पर्णताद्युक्तनीत्या
कर्माङ्गन्तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभग्नम् ।
स्वर्गादीनां फलत्वं क्रतुषु तदधिको ह्यत्र वीर्यातिरेकः
पर्णत्वादौ न वाक्यं वदति करणतां कर्म चाहानुपास्तौ ॥ ४७
उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलन्तत्
स्वीकृत्य प्राग्विचारः स्थित इति विहतः पूर्वपक्षोऽत्र मैवम् ।
अत्रत्येऽनङ्गभावे स्थिरन्निहितधियस्तत्र विद्यैक्यशङ्का
त्यक्त्वाङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥ ४८

(अथ प्रदानाधिकरणम् ॥ १८॥ )

कामानेतांश्च सत्यानिति वचनबलाद्धर्म्युपास्तेर्विभक्ता
धर्मोपास्तिस्तदर्थे गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम् ।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधिगुणिनश्चिन्तनावृत्तिरर्थ्या
राजत्वाद्यैः पृथक्त्वाद्भवति हि हविषो दानमावृत्तमिन्द्रे ॥ ४९
तत्तद्भोगंप्रतीतेर्गुणघटितपरोपासना भोगहेतु-
र्मुक्तिश्च स्यात् क्रमादित्यसद्गुणवचस्यान्यपर्याभिधानात् ।
शास्त्रेऽस्मिन्नासमाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं
नोच्छास्त्रं च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैष पादः ॥ ५०
प्रत्येकम्मेलनाद्वा दहरगुणगणेऽप्यत्र संचिन्त्यमाने
गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशङ्केति चेन्न ।

बुद्ध्यारोहे गुणानां यदवधि गुणिनो रूपमर्थ्यं ततोऽन्यत्
विद्यैकान्तन्तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः ॥ ५१

( अथ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥ )

प्रक्रान्ता दहविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये
तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्द्धारणार्थोऽस्तु मैवम् ।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्यशब्दै-
स्तस्मिन्नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥ ५२
वाक्यैस्सर्वार्थतायां दहरभजनमप्यत्र भागीति सार्थ-
स्तल्लिङ्गोपेतभागो न च बहुभिरलं योद्धुमेकं कृतार्थम् ।
नैकस्यास्योपकुर्यात् प्रकरणमलसं किंच सर्वोपजीव्ये
तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥ ५३
आत्मैक्यं देवतैक्यं त्रिकसमधिकता तुल्यतैक्यं त्रयाणा-
मन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥ ५४

( अथ पूर्वविकल्पाधिकरणम् ॥ २० ॥ )

अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोस्स्यात्
बुद्ध्यात्माऽग्निर्मनश्चित्प्रभृतिरपि यथा मानसं द्वादशाहे ।
तत्कार्यस्यातिदेशादिति न सदुदितो ह्यत्र विद्यात्मकोऽङ्गी
श्रुत्याद्यैरेव तस्मिन्नुपकृतिसमताबोधनार्थोऽतिदेशः ॥ ५५
कल्प्या ह्यत्र क्रियात्मा क्रतुरपि तदपि प्रागुपात्ताङ्गशक्त्या
वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु ।
दूरस्थाकृष्टयोगात् स्ववचनपठित[illegible] [1]बलीया-

१. लघीयान् . पा ॥

नप्राप्तेऽर्थे विधित्वं ह्यनुवदनसमेऽप्याश्रितं तद्वदत्र ॥ ५६

( अथ शरीरेभावाधिकरणम् ॥ २१ ॥ )

तत्कालाकारिणस्स्यादहमिति भजने कञ्चुकस्यात्मनोधी-
रासक्तेर्मामुपास्स्वेत्युदितवदिति चेन्नान्यथा संनिकर्षात् ।
शुद्धो ह्यात्माऽत्र साध्यः फलमतिरविनाभाविनी बोद्धृकृत्ये
बुद्ध्यासन्नेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥ ५७
कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं दृष्टभोगार्थयत्ने
स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा ।
मुक्त्यर्थे प्राप्त्यवस्थाप्रणिधिकथनतस्तत्क्रतुन्यायवाचा
चिन्त्यस्य प्राप्यतार्थो गमित इति कुतोऽतिप्रसङ्गादिशङ्का ॥ ५८
विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्तं विचिन्त्ये
प्राप्यं सर्वोपपन्नं तत इह कथमप्राप्यचिन्तानिषेधः ।
तस्माद्बद्धस्य चिन्तास्त्विति न कलुषितो नह्यहंशब्दमुख्यः
प्राजापत्त्याच्च वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥ ५९

( अथाङ्गावबद्धाधिकरणम् ॥ २२ ॥ )

उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसांनिध्यगीते-
र्नैवं सर्वाङ्गिभूतक्रतुमुखत इहाशेषसांनिध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहिताव-
च्छब्दश्चोद्गीथमात्रं वदति न तु भिदां छागनीतिस्तु नात्र॥६०

( अथ भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥ )

व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः
कृत्स्नोपास्तौ फलोक्तिस्स्तुतिरिह यदि वा कृत्स्नरूपोऽप्युपास्यः।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिस्स्तुतिस्स्या-
दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा तेन चिन्त्यस्समस्तः ॥ ६१
सामस्त्यस्यैव योगे द्रढिमवति महावाक्यतात्पर्यवृत्त्या

व्यस्तेष्वंशाननूद्य स्तुतिनियतनयादान्यपर्ये फलोक्तेः ।
नामादीनामुपास्तौ फलमवधितयाऽपेक्षितं भूमवाक्ये
नाप्येवं प्रत्यवायश्श्रुत इति विषमोदाहृतिर्नोर्थसिद्ध्यै ॥ ६२

( अथ शब्दादिभेदाधिकरणम् ॥ २४ ॥ )

सर्वासु ब्रह्म वेद्यं फलमपि खलु तद्ब्रह्मविद्येति चाख्या
ध्यानाद्युक्त्येकलक्ष्ये विधिरपि भजने सर्वविद्यैक्यमित्थम् ।
तन्नाख्यारूपभेदात्तदुपहितविधौ तेन वैशिष्ट्यसिद्धे-
र्मिश्रम्मध्वादिविद्याफलमिह च पृथक्काम्यविद्यासु चैवम् ॥ ६३
नानाशब्दादिभेदादिति कथमवदत् सूत्रकृच्छब्दसाम्ये
नह्येते यागदानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेदद्रढिम्ना
ज्ञानं यच्चाविधेयं करणमिह जगुस्तन्निरासेऽभिसन्धिः ॥ ६४
यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्य-
न्यासोपासे विभक्ते यजनहवनच्छब्दभेदादभाक्तात् ।
आख्यारूपादिभेदश्श्रुत इतरसमः किञ्च भिन्नोऽधिकार-
श्शीघ्रप्राप्त्यादिभिस्स्यात् जगुरिति च मधूपासनादौ व्यवस्थाम्॥

( अथ विकल्पाधिकरणम् ॥ २५ ॥ )

ज्योतिष्टोमाग्निहोत्रप्रभृतिवदधिकानन्दसिद्ध्यै समुच्चि-
त्यैतास्स्युर्ब्रह्मविद्या न च भजनविधिः कश्चिदेकं प्रति स्यात् ।
कर्तुन्ताः कालभेदे क्षममिति न मिथोवासनास्थैर्यबाधात्
सम्पूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥ ६६
रूपादीनां विशेषैर्ननु परभजनन्नैकरूपं विभक्तं
सामग्रीभेदतस्तत्फलमपि विषमं सम्मतन्यायतस्स्यात् ।
न स्यात् सर्वासु विद्यास्वपि हि फलतया वक्ष्यते भोगसाम्यं

प्राप्यैक्यं च प्रसिद्धं बहुसरणिजुषां लोकतो वेदतश्च ॥ ६७

(अथ यथाश्रयभावाधिकरणम् ॥ २९ ॥)

तत्तद्विद्यासु तादृक्फलंतरतमतां वारयित्वा प्रसङ्गात्
प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
माभूदुक्तं स्ववाक्ये फलमिह तु न सा पर्णमय्यादिनीतिः
स्पष्टा खल्वत्र विद्याफलकरणतया वर्तमानोक्तितोऽपि ॥ ६८
तादर्थ्यं नात्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्रा-
द्विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थप्रसङ्गे ।
तारे सोपासनेऽस्तु स्तवनमनुगमात्तावता सा तु नाङ्गं
प्राग्वक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ६९
विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावा-
स्सर्वास्वानन्दतादेर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोस्सम्भृतेस्स्थानसीमा
पुंविद्याया विभेदोऽध्ययननियतता शन्न इत्यादिकानाम् ॥ ७०
हानाद्यन्योन्ययोगस्तदुचितसमयो देवयानादिसाम्यं
सर्वत्रास्थूलतादिव्यतिहरणमथानेकशिष्यश्रुतानाम् ।
दहोपास्त्येकभावो गुणफलविधिरुद्गीथमाश्रित्य दृष्टौ
गुण्यावृत्तिर्गुणार्था निखिलपरतरोपास्तिवेद्यावसायः ॥ ७१
विद्यारूपा मनश्चित्प्रभृतय उचितज्ञानरूपक्रतुस्थाः
क्षेत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः ।
सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्ति-
र्मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोचे ॥ ७२

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

## (अथ तृतीयस्याध्यायस्य चतुर्थः पादः ॥ )

### उपोद्घातः ॥

---

कर्म प्राक्चिन्तयित्वा ननु परममथ ब्रह्म जिज्ञास्यमुक्तं
पादे विद्याङ्गतोक्तिः पुनरिह वितथाऽनेकधा त्याज्यतोक्तेः ।
मैवं कर्मैव तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नं
विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्यान्निवृत्तैकसंज्ञम् ॥ १
त्यागः काम्यक्रियाणां क्वचन परविदः क्वाप्यनर्हक्रियाणां
स्वैकाधीनत्वबुद्धेः क्वचिदनुपधिकस्वार्थबुद्धेश्च गीतः ।
अत्राहिंसादिकानामघविहतिकृतां सर्वसाधारणानां
ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ॥ २

#### ( अथ पुरुषार्थाधिकरणम् ॥ १ ॥ )

कर्तात्मा कर्मणां यस्तदधिकमिह न ब्रह्म तस्मान्मखादौ
तद्बुद्ध्यैवोपयुक्तास्स्युरुपनिषद इत्यर्धमीमांसकोक्तौ ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं
प्राह क्षिप्तान्यलिङ्गः कलुषशमनतस्सत्त्वसंवर्द्धकानाम् ॥ ३
पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैर्गगनलिपिनिभैः क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ४
कुर्वन्नेवेति वाक्यं परविदि नियताचारतोक्तिस्सहत्वेऽ-
न्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।
विद्यापूर्वं क्रियाणां करणमनुवदद्वाक्यमन्यार्थमुक्तं
नह्येतद्ब्रह्मविद्यामनुवदति नचोद्गीथविद्याक्रियाङ्गम् ॥ ५
स्वाध्यायप्राप्तये ह्यध्ययनमुदितमाधानवन्नोत्तराङ्गं

विद्याङ्गं चार्थबोधो भवतु यदधिका सा स्वरूपैः फलैश्च ।
नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नान्यविद्या
काम्यत्यागस्सविद्ये कथमिह भविता सापि यद्यङ्गमेषाम् ॥ ६
नाङ्गं विद्या मखादेर्नहि तदधिकृतेष्वेव तामामनाम-
स्स्यात्तत्तत्कर्मणां सेत्यपि न बहुविधाद्वैपरीत्योपदेशात् ।
जाबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च तस्मात्
प्राप्तिर्ग्राह्याऽन्यथापि स्वयमिह तु विधिस्तन्निषेधस्सरागे ॥ ७

(अथ स्तुतिमात्राधिकरणम् ॥ २ ॥)

जुह्वादिस्तोत्रनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वं
मैवं तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।
तत्तद्दृष्टेर्विधानं विविधमिह समालक्षि चैतत्समीपे
तेनानन्यार्थशिष्टे फलवति च विधिर्युज्यते कल्प्यमानः ॥ ८
किञ्च प्राप्तेरभावान्न तदनुवदनं नाधिरोप्य स्तुतिर्वा
युक्ता विध्येकवाक्ये गतिरियमगतेस्सात्र नासक्तिहानेः ।
उत्कर्षः कल्प्यते चेदगतिकविषये तत् प्रसह्य प्रसह्यं
मध्ये विद्याविधीनां वचनमिदमिति स्यात्तु विध्यर्थमेतत् ॥ ९
विध्यर्थत्वेऽपि युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं
दृष्ट्युद्देशेऽतिचारादथ च विशयनं स्यादिति त्वर्भकोक्तिः ।
नित्येऽस्मिन्नप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे
त्वित्थंभावे बुभुत्स्ये वच इह फलवद्दृष्टिविध्यर्थमेव ॥ १०

(अथ पारिप्लवाधिकरणम् ॥ ३ ॥)

विद्यास्वाख्यानभेदा विधिमहिमभृतास्सन्तु पारिप्लवार्था
न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः ।
मन्वाद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थे
तेनाकाङ्क्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः ॥ ११

(अथाग्नीन्धानधिकरणम् ॥ ४॥)

यज्ञादेरङ्गभावान्न तदनधिकृतेष्वङ्गिनोऽधिक्रिया स्या-
द्विद्यैवंनोर्ध्वरेतास्स्विति न बहुविधस्वाश्रमाङ्गार्हतोक्तेः ।
विद्यायोगश्चतुर्णां विधिरपि च समश्श्रूयते स्मर्यते च
प्रायेणौचित्यभूम्ना मुनिभिरभिहितं क्वापि मोक्षाश्रमत्वम् ॥ १२

(अथ सर्वापेक्षाधिकरणम् ॥ ५ ॥)

त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्सु दृष्टा
विद्या तेनानपेक्षा गृहवति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिश्श्रुतिभिरवगता ह्यस्य सातत्यसाध्या
जिज्ञासार्थत्ववादो जिगमिषति पदेत्यादिनीत्या निवर्त्यः ॥ १३
नन्विच्छार्थत्वहानिर्जिगमिषति पदेत्यादिके गत्यभावा-
च्छ्रुत्युक्तेऽस्मिंस्तथा नेत्यसदिह च यतो गत्यभावस्समानः ।
इच्छा स्याद्धीविशेषात्तदनुपजनने कर्मभिस्सा न साध्या
जिज्ञासां प्राप्तुमिच्छोर्न च न भवति तज्ज्ञानमिष्टं पुरैव ॥ १४
नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योज्यं ततः किं
नेच्छार्थं धीविशेषप्रजननमुदितन्तावता वारितं स्यात् ।
ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नापलापक्षमं ते
निद्ध्यानन्यायतोऽतस्त्वनुवदति विदेरिष्टतां सम्प्रयोगः ॥ १५

(अथ शमदमाद्यधिकरणम् ॥ ६ ॥)

यज्ञादिव्यापृतत्वादनिभृतकरणे सर्वकालं गृहस्थे
शान्त्यादीनामयोगात्तदितरनियतास्ते गुणा इत्ययुक्तम् ।
प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्ते-
स्तत्सर्वं सह्यते चेत् सह तदपि फलाद्युज्झनं चात्र तुल्यम् ॥ १६
प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायै-
रात्मार्हैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते ।

इत्थं नः शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारे विभक्तै-
र्निष्प्रत्यूहः प्रसादो निरुपधिसुहृदः श्रीधरस्याधिगम्यः ॥ १७

( अथ सर्वान्नानुमत्यधिकरणम् ॥ ७ )

आहारस्य व्यवस्था न भवति वचनात् प्राणविद्याधिकर्तुः
सामान्यस्थो निषेधो बलवति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाविधेस्स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे
पश्यैतत्प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्युषस्तौ ॥ १८

( अथ विहितत्वाधिकरणम् ॥ ॥ ८ )

यज्ञादेः कर्मणोहि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभाव-
स्तस्मादब्रह्मनिष्ठे तदननुसरणात् स्वैरितैवास्तु मैवम् ।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारा-
त्तन्त्रं काम्याग्निहोत्रादिवदिह परविन्नित्यवर्गेऽपि योज्यम् ॥ १९

( अथ विधुराधिकरणम् ॥ ९ ॥ )

दारालाभे विरक्तेर्म्रदिमनि च भवेदन्तरेणाश्रमान्य-
स्तस्मिन्निश्शेषधर्मत्याजि भवतु कथं ब्रह्मविद्येति चेन्न ।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैस्साहि तत्रापि साङ्गा
भीष्मादौ दृष्टमेतद्भवति तु वृषले गत्यभावादभावः ॥ २०

( अथ तद्भूताधिकरणम् ॥ १० ॥ )

आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनाद्य-
स्तत्रापि ब्रह्मविद्या भवतु सहकृता [१]तत्तदर्हैस्स्वधर्मैः ।
मैवं यद्यप्यभीच्छन्त्युपपतनमिदं शोधनं चास्त्यनेकं
सर्वार्हे कीर्तनाद्यं तदपि तदुचितो नैष तादृङ्निषेधात् ॥ २१

प्रायश्चित्तं वदन्ति ह्युपपतनमहापातयोर्ब्रह्मयोगं
प्राप्ते पाते प्रमादाद्विदधति मुनयो योगिनां योगमेव ।

१. तद्दशार्है. चि. पा ॥

तस्मादारूढपातेऽप्यधिकृतिरिति नाचोदनीयं हि शास्त्रं
यावज्जीवन्तु तन्निष्कृतिरिति नियमस्सूत्रकाराद्यभीष्टः ॥ २२
यो बालं हन्ति यः स्त्रीं शरणमुपगतं यश्च यो वा कृतघ्नः
प्रायश्चित्तैर्विशुद्धानपि जगदुरिमान् साधुसंस्पृष्ट्यनर्हान् ।
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः
शास्त्रं नश्शासनीयं यदि भवति तदा संप्लुतो धर्मसेतुः ॥ २३
ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावै-
र्देहैर्योगादनुज्ञापरिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधालेपकक्षोभशान्त्यै
सम्यग्ज्ञातात्मनोऽपि स्वतनुसमुचिताचारतः प्रत्यबोधि ॥ २४

( अथ स्वाम्यधिकरणम् ॥ ११ ॥ )

उद्गीथादावुपास्तिर्भवति हि फलिना यज्वनैवात्र शक्या
तस्मात्तत्कर्तृकासाविति यदि न परिक्रीतकर्माश्रयत्वात् ।
ऋत्विक्साद्ध्या यथान्ये गुणफलविधयोऽनूद्यते चैवमेषा
शक्यत्वं नाप्युपाधिर्विधिबलनियतेः स्वामिभृत्यक्रमोऽत्र ॥ २५

( अथ सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥ )

मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्यानुवादः
कश्चिन्नह्यत्र दृष्टो विधिरिति न पुरा पण्डितत्वस्य लब्धेः ।
ऊहापोहार्हता हि श्रवणमननतोऽनन्तरं पण्डितत्वं
मौनख्यातिः प्रकृष्टे मनन इति विभौ धारणाद्युक्तिरेषा ॥ २६

( अथानविष्काराधिकरणम् ॥ १३ ॥ )

शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यन्तदस्तु
प्राप्तुं बालस्य भावो न तु सुशक इति स्वैरितास्येति चेन्न ।
दुश्चारित्रादमुं नाविरत इति वचस्सन्निरुन्धे ह्यतोऽस्मि-
न्माहात्म्यं स्वंनिगूहेदिति मुनिविहिते बाल्य[illegible]ध्याशयस्स्यात् ॥

( अथ ऐहिकाधिष्ठिताधिकरणम् ॥ १४ )

भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवस्स्यात्
स्वर्गादिस्तत्र देहे न घटत इह तु स्वान्तशुद्ध्योपपत्तिः ।
स्नानप्रायत्यनीतिस्तत इति न पुरा विघ्नसम्भावनोक्तेः
कारीर्यादौ तदर्हैस्सगुणविरचितेऽप्यस्ति विघ्नः कदाचित् ॥२८

(अथ मुक्तिफलाधिकरणम् ॥ १५ ॥)

अस्त्वन्यत्रान्तरायः प्रबलतममिदं सात्त्विकत्यागयुक्तं
कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं तस्माद्बलीयान्यदि भवति परब्रह्मभक्तापराध-
स्तच्छान्तौ तत्प्रसूतिस्स यदि न झटिति स्यात् परोपास्तिलाभः॥
विद्यार्थत्वं क्रियाणां व्यभिचरणवशान्नेति शङ्कापनुत्त्यै
प्रत्यूहानां च तूर्णं प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै ।
निष्प्रत्यूहस्य सद्यः फलमिति च सतां तोषहेतोरमुष्मि-
न्पादान्ते न्यासिषातामनियमविषयौ शास्त्रकर्त्राधिकारौ ॥ ३०
प्रत्यूहस्य प्रसङ्गः क्षम इति परवित्कर्मणां तद्विधूत्यै
भोगार्थोपास्तिहेतुष्वयमनुकथितः किं मुधात्रेति चेन्न।
काम्ये निर्विघ्नबुद्ध्या पतति मतिरतस्तत्र वैराग्यभूम्ने
तत्प्रत्यूहप्रसक्तिर्भवति फलवती स्याच्च विद्यार्थकाम्यम् ॥ ३१
विद्या कर्माङ्गिका स्याद्रसतमसुखधीश्चोदिता प्राप्त्यभावा-
दाख्यानानां च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
विद्या साङ्गोर्ध्वरेतस्स्वपि गृहवति सा यज्ञदानाद्यपेक्षा
शान्त्याद्यर्हो गृहस्थोऽप्यविपदि विदुषोऽप्यन्नशुद्ध्यैव सिद्धिः ॥
एकं विद्याश्रमार्थं [1]विधुरमावियुतं विद्ययाहुश्च्युतं न
ऋत्वङ्गे दृष्टिऋत्विक्कृतिरथ मुनिता चोदिता ध्यानसिद्ध्यै ।

१. विधुरमपियुतं. पा ॥

बाल्यं शक्त्यादिगुप्तिर्बलवदभिहतैः कर्मभिर्नान्यविद्या
तद्वन्मुक्त्यर्थविद्यां स्वजनकसुकृतैरित्युवाचात्र पादे ॥ ३३
वाक्यार्थज्ञानमात्रं कतिचन कुदृशो मुक्त्युपायं गृणन्ति
ज्ञानं कर्मेति युग्मं करणमिति समुच्चित्य मन्यन्त एके ।
कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां
सर्वे तेऽप्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ॥ ३४
यद्दुःखं वर्तते तत्क्षणभिदुरतया न स्वयत्नोपरोध्यं
नातीतार्थे च यत्नो न च सुपरिहरं भाविहेतौ समग्रे ।
दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्धरम्यं
प्रायश्चित्त्या कृतानां परमकरणतो दुःखसामग्र्यपोहात् ॥ ३५
राजद्विष्टादि सर्पाद्यपि परिहरसि च्छत्रपूर्वं बिभर्षि
प्रायश्चित्ताप्रवृत्तौ फलति दुरितमित्येवमीहामिहेच्छ ।
उत्प्रेक्षारूढभाव्यापजयशमनतः स्वोक्तिसाफल्यमिच्छन्
पश्यंश्चाबालतिर्यग्भयचकितगतिं जोषमित्थं जुषस्व ॥ ३६
साध्यं वा साधनं वा स्वविहतत्रिपथैर्दुर्निरूपं वदन्त-
स्तद्वादे किं प्रवृत्ताः किमिति च विदधत्यन्वहं भोजनादीन् ।
मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत् प्रागसिद्धेः
साङ्ख्यास्त्वत्रानुयोज्यास्सकरणदशया नित्यमुक्तिं गृणन्तः॥ ३७
मोक्षाभावे मुधा स्यात् सपरिकरमिदं साधनं चिन्त्यमानं
मुक्तिश्चेद्भ्रान्तिसिद्धा भ्रम इह भविता यावदात्मस्वरूपम् ।
क्षेत्रज्ञं नित्यमुक्तं कथयितुरफलः साधनाध्याय इत्थं
प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिका नः॥
सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयान्यत्र नाशो
धीसङ्कोचप्रणाशो विकसनमतथाभूतमात्रागमात् स्यात् ।

मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिर्मुक्तबुद्धे-
स्सामग्री चेश्वरेच्छा प्रभृतिसमुदयस्स्यादनावृत्तिरेवम् ॥ ३९

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य चतुर्थः पादः॥ ४ ॥

॥ समाप्तश्चाध्यायः ॥ ३ ॥

श्रीमते निगमान्तगुरवे नमः.

---

( अथ चतुर्थस्याध्यायस्य प्रथमः पादः )

उपोद्घातः ॥

---

इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायस्सहाङ्गै-
स्तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।
स्थूले देहेऽस्य सिद्ध्येद्यदिह वदति तत् पादयुग्मेन पूर्वं
निष्क्रान्तस्याथ यत्स्यात् परिगणयति तत् पादयुग्मान्तरेण ॥ १
सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति यद्यास्ति शेषं
ब्रूतामेतच्च पूर्वं नहि तदिह फले संघटेतेतिचेन्न ।
मुक्तैरन्यैरसिद्धिं प्रकृततदविनाभावमासन्नसिद्धिं
मुक्तावस्थासमं च स्थिरभजनरसं व्यङ्क्तमत्रानुबन्धः ॥ २

आवृत्त्यधिकरणम् ॥ १ ॥

शुद्धैरुत्कृष्टधर्मैस्सदनपचरणे ब्रह्मविद्या भवित्री-
त्युक्तं पूर्वाधिकारे विमृशति तु परं तत्स्वरूपं यथावत् ।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्ता-
द्यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥ ३
ज्ञानं मुक्तेरुपायः श्रुतिभिरभिहितं तस्य सङ्ख्या त्वनुक्ता
सौकर्यं स्यात् सकृत्त्वे स्वत इह च भवेच्चारितार्थ्यं विधीनाम् ।
सम्यक्त्वात्तत्कृतत्वं न पुनरनुगमात् प्रोक्तमित्यप्यसारं
सामान्योक्तेर्विशेषे सति पशुनयतस्तत्र विश्रान्तिसिद्धेः ॥ ४
किंचाग्नेय्यादिनीत्या विदिरिह वदति ध्यानशब्दार्थमेव
ध्याने चोपासनोक्तिः परभजनतया वक्ति सेवात्मकत्वम् ।
ऐकार्थ्ये विद्युपास्योर्व्यतिकरिततया श्रूयते च प्रयोगः
कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्ववादः ॥ ५

योगोद्युक्तेषु यस्स्यात् स्ववरणविषयस्तेन लभ्यः परात्मा
ग्राह्यत्वं च प्रियत्वात्तदपि हि गुणतो भक्तिरेवं श्रुतैव ।
सा च प्रीत्यात्मिका धीः क्वचिदतिशयिते स्मृत्यबाधोऽप्यतस्स्यात्
प्रोक्ता चैषा ध्रुवानुस्मृतिरनुवहनात्तैलधाराक्रमेण ॥ ६

रागादादौ प्रवृत्तिश्श्रवणमननयोर्ध्यानमेकं विधेयं
तत्र द्रष्टव्यशब्दो विशदतमतया वक्ति वैशिष्ट्यमात्रम् ।
शब्दोत्थं दर्शनं ये विषयमकथयन् वेदनोक्तेरमीषां
व्याघातादिप्रपञ्चस्स्वयमिह निपुणस्सूक्ष्ममन्वीक्षणीयः ॥ ७

ध्याने वैशद्यमात्रादुपचरणमिदं दृष्टिशब्दप्रवृत्ति-
स्तुल्यं तत्त्वन्मतेऽपि ह्यभिलपति धियं चाक्षुषीं दृष्टिशब्दः ।
घ्रातृस्प्रष्ट्रादिवद्दृष्ट्यभिवदनमिदं चक्षुषा भानशून्ये
गौणन्तत्तुल्यभावे सति बहुनयत्रानस्मदीयस्तु पक्षः ॥ ८

न द्वारद्वारिक्लृप्तिः कथमपि घटते विश्रमश्चेद्विशेषे
सामान्यात्मा विशेषैर्लघु च न गुरुभिः कर्तुरैक्ये विकल्प्यम् ।
अर्थैक्ये दर्शनोक्त्या स्मृतिरुपचरिता युज्यते स्पष्ट्यसिद्ध्यै
स्मृत्युक्तादर्शनस्योपचरणमसदित्यन्यदेतत्फलान्नः ॥ ९

कृच्छ्रादौ शक्तिहीनो दृढपरितपनस्संयमार्हश्च कुर्यात्
सर्वार्थी केशवानुस्मृतिमिति घटते तद्विकल्पो यथार्हम् ।
सामान्यात् सर्वदोषेष्वियमुपकुरुते सर्वनैमित्तिकानां
मुक्तेरप्यत्र मूलम्मुनिरमनुत तां तादृशध्यानरूपाम् ॥ १०

नन्वेवं ये मुकुन्दं शरणमुपगता वर्जिता ध्यानयोगै-
स्ते चातिक्रम्य मृत्युं यमिन इव परं धाम यान्तीत्युशन्ति ।
सत्यन्तेऽपीतिशब्दान्नियतविषययोर्गौरवे लाघवे च
प्राप्तार्थे ध्यानशास्त्रं प्रणिधिसहृदशायोगिभिर्योगविद्भिः ॥ ११

धर्मो वर्णादियोग्यः कलुषशमनतस्सत्त्ववृद्ध्योपकारी
भक्तेस्तद्वत् प्रपत्तिस्त्वगतिकसमयेष्वन्तरायापहन्त्री ।
सानुक्रोशे हि शक्ते शरणवरणतस्सर्वसाद्ध्यं सुसाध-
म्मोक्षाकाङ्क्षी प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतं च ॥ १२

( अथात्मत्वोपासनाधिकरणम् ॥ ४ ॥ )

जीवादत्यन्तभिन्नस्स विभुरभिदधे लक्षणैस्साधनान्तै-
र्मुक्त्यर्थोपासनेऽस्मिन्मुषिततमसि न ब्रह्मदृष्ट्यादियुक्तिः ।
तत्त्वज्ञे वीतरागे तदिह न घटते सोऽहमस्मीत्युपास्ति-
स्तन्न स्वात्मान्तरात्मन्यहमिति वचसोऽप्यत्र मुख्यप्रवृत्तेः ॥ १३
वस्विन्द्रादेरुपास्तौ प्रकृतिशबलितस्वान्वितेक्षा पुरोक्ता
शुद्धस्स्वात्मा च चिन्त्यः क्वचिदिह तु विभुस्तादृशा स्वेन युक्तः।
व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात्तथापि
ब्रह्मायत्तस्वरूपप्रमितिसुदृढतासिद्धयेऽहंग्रहोक्तिः ॥ १४
ऐक्योपास्तावहं त्वं त्वमहमिति मतिर्निर्विशेषे कथं स्यात्
भेदाभेदाभिलापः करकमणिकतद्व्योमनीत्या न मुख्यः ।
मत्तुल्यस्त्वं त्वयाऽहं सम इति वदतां नोपचारोऽपि युक्त-
स्तस्मात् सर्वान्तरात्मन्ययमहमिति धीराकृतिन्यायसिद्धा ॥ १५
अद्वैतं द्वैतहानौ न भवति सुवचं तत्प्रतिद्वन्द्विकत्वाद्
द्वैतं चाद्वैतगर्भे द्वितयमपि हि तत्स्वस्वरूपादभिन्नम् ।
द्वैताद्वैतं च तादृक्तदुभयनियमानुज्झनादेव सिद्ध्येत्
सर्वं स्थाने स्थितं स्यात् प्रमितिपरवतान्नेतरेषान्तु किंचित्॥ १६
नन्वद्वैते निषेध्यो गगनकुसुमवद्भ्रान्तिसिद्धोऽस्तु भेदो
मैवं सत्यादभिन्नः स खलु न यदि तद्भ्रान्तिसिद्धत्वसिद्धिः ।
भिन्नत्वं चास्य तस्माद्यदि भवति मृषा विद्धि दत्तोत्तरन्तत्

सत्यं चेत् सत्यभेदोपगतिरिति मुधा दूरतो धावनं वः ॥ १७

( अथ प्रतीकाधिकरणम् ॥ ३ ॥)

नामादिब्रह्मदृष्टावपि तदहमिति प्रत्ययः पूर्ववत् स्यात्
ब्रह्मध्यानत्वसाम्यादिति यदि न न खल्वन्तरात्मा प्रतीकः ।
न ब्रह्मण्यन्यदृष्टिः कथमपि घटते तस्य सर्वाधिकत्वा-
दन्यस्मिन् ब्रह्मदृष्टौ परमिह नियतैर्लक्षणैस्तद्ग्रहोऽर्थ्यः ॥ १८

आत्मन्यब्रह्मभूते भवतु फलवती कुत्रचिद्ब्रह्मदृष्टि-
र्नैषा वस्तुव्यवस्थां शिथिलयति नरे वैनतेयत्वधीवत् ।
एतावन्मात्रमोहादिदमहमिति तु स्थापयन् क्षिप्रमृच्छे-
दिन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम् ॥ १९

( अथादित्यादिमत्यधिकरणम् ॥ ४ ॥)

तादर्थ्याद्देवतानां फलकरणतया कर्मणश्चोदितत्वा-
दादित्यादौ निकृष्टात्मनि भवतु समुत्कृष्टकर्माङ्गदृष्टिः ।
मैवं कर्म प्रधानं विहितमपि यतस्तत्समाराधनन्तत्
तत्प्रीता देवतैव प्रदिशति फलमित्यर्थतस्सा प्रधानम् ॥ २०

अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे
याथात्म्यं सर्वबोधानुगतमिति मते युज्यते नान्यदृष्टिः ।
तन्नात्राद्ये हि न स्याद्विमतिरविमता भ्रान्तिनीतिः परस्मिन्
तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ॥ २१

दृष्टव्यापह्नवे न भ्रमदनुघटिता दृष्टिरद्वैतमोह-
स्स्यादुत्कृष्टापराधस्तत इह घटिता तादृशत्वस्य दृष्टिः ।
तादृग्दृष्टौ न दोषस्तत इह कतिचित्तार्क्ष्यदृष्ट्यादिनीत्या
द्वैधान्यत्रान्यदृष्टिर्न किमनभिगता व्यक्तितो जातितश्च ॥ २२

मुख्यं ब्रह्मैकमेवेत्यवहितमनसां ब्रह्मदृष्टिः कथं स्या-

देकत्वेनेति केचिन्न हि बलिनि विधौ शङ्कनीयो विरोधः ।
स्वेच्छापूर्वं द्विचन्द्रभ्रमवदिह भिदा कल्पनामाहुरन्ये
बंभ्रम्यन्ते यथा च श्रुतिषु बहुविधं ब्रह्म भातीति बालाः ॥ २३

( अथासीनाधिकरणम् ॥ ५ ॥ )

आसीनस्यैव योगश्श्रुतिषु न ददृशे ध्यानमाहुस्सदेति
न्यासश्चेलाजिनादेर्नियमविधिकृतः पाक्षिकासीनतायाम् ।
तस्मादेतद्घटेत स्थितिगतिशयनेष्वप्रकम्प्येन्द्रियस्ये-
त्यप्राप्तं यत्ननिद्रान्वयिनि कथमविच्छिन्नधीसन्ततिस्स्यात् ॥ २४
चित्तैकाग्र्योपपत्त्यै विदधति नियतिं देशकालासनादे-
स्सच्छिद्रं त्वन्यदाऽपि क्षममिति सततं चिन्तनं संस्मरन्ति ।
प्रत्यक्संस्कारभूम्ना परनिहितधियस्तादधीन्यादिबुद्ध्या
जुष्टं न्यासक्तनीत्या भवति हि समये योगिनः कर्म सर्वम् ॥२५
कर्मोपास्त्यङ्गभूतं यदिह नियमितं तत्परे पूर्वपादे
योगेन ब्रह्मदृष्टिर्यदपि च परमो धर्म इत्युक्तमाप्तैः ।
तेन प्राधान्यसिद्धावितरदनुगुणन्तस्य योज्यन्तथाच
प्रायः प्रक्रान्तयोगे पटिमलघुतया कल्पितः कालयोगः ॥ २६
विद्याङ्गं पूर्वमुक्तं किमिह पुनरसावासनाद्यङ्गचिन्ता
दृष्टार्थांशं विभज्य प्रथयितुमपि न प्राक्शमाद्यङ्गवादात् ।
सत्यं ध्यानाख्यधारावहनमतिदशा त्वन्वहं साधनीया
चित्तैकाग्र्येण सर्वप्रयतनविरहे स्यादितीदं प्रकाश्यम् ॥ २७

( अथाप्रयाणाधिकरणम् ॥ ६ ॥ )

एकस्मिन्नेव घस्रे यदि भवति परध्यानरूपा तु भक्ति-
स्तद्विश्रान्तो विधिस्स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।
छान्दोग्ये यावदायुस्समुचरितमुदितं ब्रह्मलोकाप्तिहेतो-
स्तद्धि ध्यानस्य वृत्तौ तदपि च विहितं कुत्रचित् प्रायणान्तम्॥

( अथ तदधिगमाधिकरणम् ॥ ७ ॥ )

नाभुक्तं कल्पबृन्दैरपि सुपरिहरं कर्म गीतम्मुनीन्द्रैः
पापाश्लेषप्रणाशश्रुतिरपि परविद्वैभवोक्तिस्ततस्स्यात् ।
मैवं नाभुक्तमित्याद्यपि फलजनने कर्मणो दार्ढ्यमाह
प्रायश्चित्तक्रमेण त्विह परभजनं चोदितं कर्मशान्त्यै ॥ २९

निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नं
नात्र स्वर्गादिनीतिः प्रतिहतिविगमे धीविकासस्स्वतो हि ।
पापालेपः प्रमादोदितसहनमिति स्थाप्यमाज्ञानुवृत्त्यै
नो चेन्न स्याद् गतिर्नाविरत इति गिरो योगिनां च प्रवृत्तेः ॥

अश्लेषः कर्मशक्तेरनुदय उदये तन्निवृत्तिर्विनाश-
श्शक्तिस्सा च प्रणेतुस्तदुचितफलकृन्निग्रहानुग्रहात्मा ।
प्रायश्चित्तं निमित्ते कथमनुदित इत्यत्र नैवानुयोज्य-
न्नाधर्मस्तस्य तत् स्यादिति खलु हृदयं ग्राह्यमश्लेषवाचः ॥ ३१

धीपूर्वन्तूत्तराघं न सृजति परवित् सर्वदा सावधानो
जातं नैमित्तिकैश्च क्षिपति समुचितैराशु भुञ्जीत वा तत् ।
वृत्रादौ दृष्टमेतन्नियतिविभवतश्चेदिराजादिसिद्धि-
र्युक्ताऽद्यैवान्यदा वा मुनिरिह मनुते ब्रह्मनिष्ठस्य मुक्तिम् ॥ ३२

( अथेतराधिकरणम् ॥ ८ ॥ )

धर्मस्याश्लेषनाशौ नहि परभजनानुग्रहेणोपपन्नौ
तस्याघत्वप्रसङ्गाच्छ्रुतिरिह च परं पापनिर्मुक्तिमाह ।
भोगैस्स्यात् पुण्यनाशोऽस्त्विति यदि न यतः काम्यमप्यस्य पापं
तस्मिंस्तल्लक्ष्मसिद्धेर्न सुकृतमिति च श्रूयते पापताऽस्य ॥ ३३

पुण्यं विद्यानुकूलं यदिह सफलता तस्य विद्याप्रदत्वात्
तस्यां यन्नोपयुक्तं तदपि दुरितवद्बन्धकत्वेन वार्यम् ।

कारागारोपरुद्धे निगलयुगलतस्सार्वभौमस्य भृत्ये
हैमं कार्ष्णायसं च प्रसदनसमये भञ्जनीयं सहैव ॥ ३४

काम्यन्नेच्छेद्विरक्तो यदि किल कुरुते रागयोगात् फलेत्तत्
नाधीपूर्वं च काम्यं किमपि न च दिशेद्बन्धमज्ञातधर्मः ।
विद्यार्थैर्लिप्यतेऽतः किमितरदिति चेन्नाधिकैस्सान्तरायै-
रन्यार्थैर्मोहजैः क्वाप्यनुतपनवतो बन्धुजैश्चास्त्वलेपः ॥ ३५

( अथानारब्धकार्याधिकरणम् ॥ ९ ॥ )

नश्यत्वारब्धकार्यं परविदि दुरितं नह्यधीतो विशेष-
स्सर्वे पाप्मान इत्यप्यभिहितमिति चेन्नोपलम्भादिबाधात् ।
सद्विद्या तस्य तावच्चिरमिति च वदत्यस्मरंश्चागमज्ञा
जीवन्मुक्त्यादिशब्दोऽप्युपचरणपरो मोहितास्तेन मन्दाः ॥ ३६

रोगाद्यारम्भकाणां प्रशमनविधयस्सन्ति दानार्चनाद्याः
प्रत्येतुस्स्वावताराद्यपि विभुरपुनर्जन्मतामप्यगायत् ।
तस्मादारब्धकार्ये फलनियतिवचो दुर्घटं भाति मैवं
प्रायश्चित्तोज्झितानां ननु फलनियतिस्सूत्रकाराद्यभीष्टा ॥ ३७

( अथाग्निहोत्राद्यधिकरणम् ॥ १० ॥ )

श्लेषश्चेदस्य पुण्यैस्स तु भवति तदा बन्ध इत्यभ्युपेत्यं
यद्यश्लेषो भवेत्तैः परविदि विफला पुण्यनिष्ठा परस्तात् ।
तस्माद्धर्मोऽप्यधर्मक्रमत इह परित्याज्य एवेत्ययुक्तं
न स्याद्बन्धाय विद्याङ्कुरमुपचिनुते ह्यग्निहोत्रादिधर्मः ॥ ३८

सर्वापेक्षेत्यवोचन्ननु परभजने कर्मणामङ्गभावं
भूयो वक्त्यग्निहोत्रेत्यपि तदिति मुधा ह्येकमत्रेतिचेन्न ।
विद्याया नैरपेक्ष्यात्तदपरिकरता शङ्किता प्रागपास्ता
श्लेषाभावप्रसक्ता त्विह पुनरिति तन्नीतिवैषम्यसिद्धेः ॥ ३९

(अथेतरक्षपणाधिकरणम् ॥ ११ ॥)

निर्दिष्टास्माच्छरीरादिति नियतिरतो यावदित्यादिशब्दः
कर्मप्रारब्धकार्यं कथयतु विदुषस्तच्छरीरान्तमेव ।
मैवं प्रारब्धचैतत्र्यान्न तदवधिविधौ व्याप्रियेतान्यपर्यात्
भूयो देहस्मृतेश्चान्तिमवपुषि दृढोद्यत्समाधेस्तु मोक्षः ॥ ४०
नन्वत्रास्मादितीदं वितथमिह पदं स्याच्छरीरे न तु स्यात्
कारागारोपमत्वप्रथनपरतया तस्य साफल्यसिद्धेः ।
त्याज्यत्वव्यक्तये हि प्रभुरसुखमिमं लोकमित्यप्यगायत्
भूतावासं विशिषन्निममिति च मनुर्हेयभावं व्यनक्ति ॥ ४१
सर्वे जीवास्समानास्स्वत इह विविधं कर्म चानादि तुल्यं
वैषम्यादिश्च दोषो न भवति भगवत्यन्यथा शास्त्रभङ्गः ।
मुक्तौ नातो विलम्बप्रभृति घटत इत्यल्पसारोऽनुयोग-
श्चित्रे कर्मप्रवाहे फलसमयभिदा ह्याश्रिता सर्वतन्त्रैः ॥ ४२
आवर्त्या ब्रह्मविद्या त्वसकृदहमिति स्याच्च न स्यात् प्रतीके
कर्माङ्गेऽर्कादिदृष्टिः प्रणिधिरपि भवेत् सासनः प्रत्यहं च ।
पापे पुण्ये च नाशादिकमथ तु तयोर्भोग्यतारब्धकार्ये
कार्यत्वं स्यार्हवृत्तेरिति कथितमिहारब्धशान्तौ च मोक्षः ॥ ४३

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

(अथ चतुर्थस्याध्यायस्य द्वितीयः पादः ॥)

उपोद्घातः ॥

---

नित्यत्वज्ञत्वपूर्वैर्निपुणमभिहितं जीवतत्त्वं द्वितीये
जाग्रर्यादौ च खेदो जगदटविमहाजाङ्घिकस्याथ गीतः ।

विद्यारम्भावसानावधि यदपि परध्यातुरर्थ्यं तदुक्तं
प्रारब्धस्यावसाने वपुरिह जहतो गत्युपक्रान्तिमाह ॥ १
वर्ण्यो वैराग्यपादे तनुकरणगणक्षोभ ईदृक्तथापि
ब्रह्मज्ञस्यापि काले भवति मृतिरिति ज्ञप्तयेऽत्रानुबन्धः ।
तस्योत्क्रान्तौ विशेषं कथयितुमुचिता चात्र साधारणोक्ति-
र्मध्ये विद्याफलानाम्मरणमपि वदंस्तत्प्रियं चिन्त्यमाह ॥ २
वृत्तिर्वागादिकं वा क्वचन भजतु सम्पत्तिमन्यक्रमां वा
श्रुत्यैवोक्तक्रमां वा नहि फलमिह तच्चिन्तनस्येति चेन्न ।
सम्पत्त्याम्नानमीदृक्क्रमनियतियुतं युज्यते नह्यपार्थं
तस्मात्तच्चिन्तनं क्वाप्युपकुरुत इति स्थाप्यते तद्यथार्हम् ॥ ३
जीवं ये नित्यमुक्तं निजगदुरथवा जीवतो मुक्तिमाहु-
स्तत्तज्जल्पोपजापप्रचलितनिगमग्रामसंक्षोभशान्त्यै ।
उक्त्वा प्रारब्धकार्यं विदुषि न फलवत् प्रायणं चात्र तुल्यं
नाडीभेदप्रवेशप्रभृति समधिकं वक्ष्यति ब्रह्मगत्यै ॥ ४
आयुस्सीमामनिष्टैरिह बहुभिरसावात्मनः प्रेक्ष्य योगी
यत्कुर्याद्यच्च पुत्रप्रभृतिषु न हि तत् तर्क्यमत्रेत्यनुक्तिः ।
गीतादिष्वन्त्यकाले यदगणि तदपि प्राच्ययोगप्रकारे
तत्तत्प्राप्यानुरूपे नियतमिति यथापूर्वधीरत्र भाव्या ॥ ५

( अथ वागधिकरणम् ॥ १ ॥ )

कर्मज्ञानाक्षवर्गो मनसि न विलयं यात्यतत्सम्भवत्वा-
त्तद्वृत्तेस्तादधीन्यात्तदुपरतिमिह प्राह सम्पत्तिशब्दः ।
इत्येतन्नोपपन्नं तदुभयविलये चोद्यनिस्तारसाम्या-
त्सम्पत्तिः श्लेषमात्रं करणविषयवाक्छब्दमुख्यत्वसिद्ध्यै ॥ ६

( अथ मनोधिकरणम् ॥ २ ॥ )

अन्नस्योक्तं विकारो मन इति मनसः प्राणसम्पत्तिवाक्ये

प्राणस्याम्भोमयत्वात् प्रकृतिविकृतितासम्भवात्तल्लयोऽस्तु ।
मैवं तत्तन्मयत्वश्रुतिरभिमनुते तत्तदाप्यायनं तैः
प्राग्वत् संश्लेषमात्रं तत इह हि मनः प्राण इत्यामनन्ति ॥ ७

(अथाध्यक्षाधिकरणम् ॥ ३ ॥)

प्राणस्सैकादशाक्षस्तदनु निविशते तेजसीत्थं श्रुतत्वा-
न्मध्येऽन्यप्राप्तिकॢप्तौ श्रुतिहतिरिति चेन्नात्मयोगस्य चोक्तः ।
प्राणस्य स्वाप्तजीवे मिलति निजतनोरुद्धृतैर्भूतसूक्ष्मै-
स्तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिवत् स्यात् ॥ ८

(अथ भूताधिकरणम् ॥ ४ ॥)

तेजस्येवास्तु युक्तः श्रिततनुभृदनस्तेजसीत्याद्यबाधा-
च्छ्रुतिन्यायोऽपि नास्मिन्निति यदि न तथान्यत्र भूतान्तरोक्तेः ।
विश्वारम्भाय देवस्त्रिवृतमकृत च प्रागिमं भूतवर्गं
प्राचुर्यात्तत्तदेकव्यवहृतिरिति चासूत्रयत्पूर्वमेव ॥ ९

(अथासृत्युपक्रमाधिकरणम् ॥ ५ ॥)

अत्रैव ब्रह्म विन्दत्यमृत इह भवत्यागमाद्ब्रह्मनिष्ठो
नोत्क्रान्तिस्तस्य युक्तात्यसदुपनिषदो ह्यस्य गत्याद्युशन्ति ।
नान्यप्राप्त्यर्थमेतत् सगुणसमाधिके कुत्रचिन्मानहाने-
स्तस्मादत्रामृतत्वप्रभृतिवचनतस्तादृशी तद्दशोक्ता ॥ १०
निश्शेषं भोगहेतौ गलति परविदः कर्मणि प्रायणेऽथो
गत्यर्थं सूक्ष्मदेहानुगतिरणुतया निश्चितस्याफला स्यात् ।
मार्गे संवादवादस्तदुचितवपुषा त्वस्त्विवतीवानुयोगे
कृत्स्नाविद्यानिवृत्तेः परपदगमनापेक्षिणीत्यादि वाच्यम् ॥ ११
कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।

विन्देत्सायुज्यमिन्दोरिह भवति पुनस्तच्छ्रुते[illegible] ।
मैवं पूर्वोक्तनीतिस्त्विह नहि विहता तस्य सायुज्यमिन्दौ
विश्रान्त्यै सू[illegible]नीत्या जगदुपकृतये भीष्मकालप्रतीक्षा ॥ २३

किञ्च प्रारब्धकर्मप्रतिनियतमिदं जाह्नवीसम्भवस्य
स्वेच्छायेनैवमासीत् स च वसुरभवन्नैष साक्षाद्विमुक्तः ।
तस्माद्विन्देत मुक्तिं नरपितृदिविषद्रात्रिकालेऽपि योगी
स्यातां प्राशस्त्यनिन्दे तदितरविषये गीतयोक्तौ तु मार्गौ ॥ २४

सम्पद्येतान्यदक्षं मनसि तदपि तत्संयुतं प्राणवायौ
सोऽध्यक्षे तैस्समेतस्स च तदखिलवान् भूतवर्गे तु सूक्ष्मे ।
उत्क्रान्तिस्स्यात् समाना युतिरथ च परे सा च संश्लेषमात्रं
नि[illegible]नाड्या घृणिभिरथ निशादेवराज्योश्च मोक्षी ॥२५

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

( अथ चतुर्थस्याध्यायस्य तृतीयः पादः ॥ )

उपोद्घातः ॥

---

निर्गत्य ब्रह्मरन्ध्रात् तपनकरमथालम्ब्य नाडीनिबद्धं
प्रत्युद्यद्देववृन्दप्रहितबलिरसौ येन योगी प्रयाति ।
मौकुन्दस्थाप्यतेऽसौ परमिह मुनिना पञ्चभिर्नीतिभेदै-
र्मोहाकूपारपारं पुरमभिगमयन्मुक्तिघण्टापथो नः ॥ १

अर्चिराद्यधिकरणम् ॥ १ ॥

शाखाभेदेषु भिन्नां गतिमुपनिषदोऽधीयते तन्मुमुक्षो-
र्विद्यावैषम्यनीत्या स्मृतिरपि विषमा न व्यवस्थाऽर्चिरादेः ।

नैतत् सर्वत्र तैस्तैरिह तदिदमिति प्रत्यभिज्ञानसिद्धौ
भाव्यं न्यूनाधिकत्वप्रभृति निखिलमप्यत्र सिद्धाविरुद्धम् ॥ २
चैद्यादीनामयोध्यास्थिरचरजनुषां पुण्डरीकादिकानां
भीष्मादीनामुपास्तिक्रमभवविभवव्यूहलोकस्थितानाम् ।
धातॄणां तत्सुतानामधिकृतिविगमे ब्रह्म सम्प्राप्स्यताम-
प्यन्येषां प्रस्थितिस्सा शितपृथुमतिभिश्चिन्तनीया यथार्हम् ॥ ३

(अथ वाय्वधिकरणम् ॥ २ ॥)

संप्राप्तौ देवलोको मरुदपि च समं वत्सरादित्यमध्ये
नैकत्वं रूढिभेदात्तत इह तु तयोस्तुल्यभावाद्विकल्पः ।
मैवं योऽयं प्रसिद्धः पवत इति मरुद्देवतानां गृहत्वं
तस्योक्तं धारकत्वादत उचितमिदं निर्विकल्पं तदैक्यम् ॥ ४

(अथ वरुणाधिकरणम् ॥ ३ ॥)

कौषीतक्यागमोक्ता वरुणशतमखौ सोऽपि नाथः प्रजानां
क्वापि स्थाप्या निपीड्य श्रुतिमपि विफला ह्यन्यथा तच्छ्रुतिस्स्यात्।
तस्मात्ते वायुलोकात् परमनुपठनात् तत्र सन्त्वित्ययुक्तं
स्यादर्थाद्विद्युतोऽन्वग्वरुण इति परौ पाठतस्तत्परौ स्तः ॥ ५
यत्त्वस्यामानवस्य श्रुतमिह परसंप्रापकत्वं भवेत्तत्
सद्वारत्वेऽप्यबाधन्तदपि सहकृतौ तैश्श्रुतौचित्यभूमा ।
यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतु-
स्तस्मान्नेता स नान्यो विदुरतिवहनं वैद्युतेनैव तस्मात् ॥ ६

(अथातिवाहिकाधिकरणम् ॥ ४ ॥)

भोगस्थानान्यमूनि ज्वलनदिनमुखान्यध्वचिह्नानि वा स्यु-
र्लोकोक्तिच्छाययैवं स्थितमिदमिति नासंभवात् कालशब्दे ।
स्पष्टे नेतृत्वपुंस्त्वे क्वचिदतिवहनं तद्वदन्यैश्च कार्यं

## (अथ चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ )

### उपोद्घातः ॥

उक्तं पादैरघानामिति पृथुवपुषस्सूक्ष्ममूर्तेश्च हानं
निर्धूतोपाधिराशेर्निरुधिकमहानन्दमन्त्येन वक्ति ।
स्वाविर्भावोऽत्र चिन्त्यस्त्रिभिरधिकरणैश्छन्दवृत्तिस्त्रिभिश्चे-
त्येवं द्वे पेटिके स्तस्त्वत उभयमिदं नोपधेरीशनिघ्नम् ॥ १

सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

अश्रान्तस्वप्रकाशं यदिदमहमिति प्रत्यगात्मस्वरूपं
तस्याविर्भावसिद्धौ न तु किमपि फलं स्यात् सुषुप्ताविशेषात् ।
तस्मान्मुक्तस्स्वमन्यद्व्रजति वपुरसौ देववद्रूपशब्दा-
न्मैवं स्वेनेति शब्दो ह्यफल इह भवेद्रूपवाचार्थसिद्धेः ॥ २
नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्यूचिवांस-
स्तन्मात्रं स्यान्न विद्याफलमिति न विदुर्नित्यसिद्धं त्वसाध्यम् ।
सिद्धं साध्यानुवेधाद्भवति फलमतस्सात्त्वविद्याविभङ्गो
यद्वा सिद्धस्य वित्तिस्तदिह न वितथं मुक्त इत्यादि सूत्रम् ॥ ३
स्वाकारान्नित्यभातादधिकसुखतया भाति जीवस्तदानीं
सिद्धाविर्भावमात्रेऽप्यनुविदुरभिनिष्पत्तिवाचः प्रयोगम् ।
संकोचात्यन्तहानिर्ध्रिय इयमभिनिष्पत्तिरागन्तुरुक्ता
निष्पत्त्यूहंस्वरूपोपधिकमपि तदा स्वेनशब्दः प्रवक्ति ॥ ४
प्रायस्स्वस्मिन् स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा
दृष्टं यत्स्यात् समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः ।
कृत्स्नं तच्छर्कराघव्यतिकरितसुधासिंधुवत् स्वादुभूतं
तस्मात् स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः ॥ ५
मल्ली शुद्धं प्रसूनं जनयति समये रञ्जकोपाधिमुक्ते
तद्वन्नाथानुकम्पा फलमुपशमितावग्रहं सूरितुल्यम् ।

तस्मादागन्तुकेऽपि प्रतिहतिविरहात् तादृशे धीविकासे
प्रत्यापन्नस्वदायक्रम इह कथितः प्राप्तसिद्धेः प्रतीचः ॥ ६
अर्वाञ्चो मुक्तिभेदं कतिचिदगणयन् स्वात्ममात्रानुभूतिं
तत्र ब्रह्मानुभूतेर्विहतिरुपधितस्स्यात् स्वतो वेति चिन्त्यम् ।
सन्ति द्वेधापि दोषास्तत उपचरणान्मुक्तिशब्दोऽत्र युक्तः
सालोक्यादिप्रभेदेष्वपि सरणिरियं सावधानैर्विभाव्या ॥ ७

( अथाविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥ )

जीवेशौ नित्यभिन्नौ श्रुतिरिह च सहेत्याह मुक्तस्य भोगं
साम्ये पारम्यमुक्तं स्मृतमपि स पृथग्भातु तस्मात् परस्मात् ।
मैवं तत्त्वं हि मुक्तौ स्फुरति तदनघो भेदभानांश इष्ट-
स्सिद्धे देहात्मभावे त्विह न हि घटते तत्स्वनिष्ठत्वबुद्धिः ॥ ८
मन्त्रोक्तं भोक्तृभावे यदि सहभवनं ब्रह्म न स्यात् प्रधानं
तस्मात्तद्भोग्यभावे भवतु तदुचितं ब्राह्मणन्याकृतेश्च ।
द्वेधापि ब्रह्म तत्त्वात् पृथगितर इह स्यादितीदं च वार्तं
सिद्धे भेदे स्वनिष्ठास्थितिपरिहरणं ह्यत्र सूत्रोपपाद्यम् ॥ ९
पारम्यं यच्च साम्ये श्रुतमिह न हि तत् सर्वथेत्यप्यधीतं
ग्राव्णो हेम्नश्च यद्वत् समधरणधृतौ स्यात्तदुक्तिस्तथात्र ।
एवं तद्देहभावे स्थितवति विविधाबाधिताम्नायभूम्ना
ब्रह्मैवेत्यादिवाक्यं प्रथयति समतां तादृगित्यप्यधीतेः ॥ १०

( अथ ब्राह्माधिकरणम् ॥ ३ ॥ )

ज्ञानत्वे किं फलं स्यादिति मिषतु गुणैस्तादृशं ब्रह्मसाम्यं
[१]किन्तैरन्यैस्स्वरूपात्तदिह भवतु चिन्मात्ररूपप्रकाशः ।
इत्थं चात्रोक्तपक्षद्वयमुभयविधश्रुत्युपात्ताविरोधा-
न्निर्धूयाथ द्विधाविर्भवनमघटयत् सिद्धतत्त्वप्रकाशात् ॥ ११

१. किन्धर्मैरस्वरूपैस्त. पा ॥

पर्यायौ नामपाठेष्वनुपरिपठितौ मुक्तिकैवल्यशब्दौ
कैवल्यं चान्ययोगत्यजनमिति कथं धर्मिधर्मान्वयोऽस्य ।
मैवं ब्रह्मस्वरूपादपरमिह न खल्वस्ति किंचित् स्वनिष्ठं
न द्रव्यं चागुणं स्यादधिकरणयुगं तन्निरातङ्कमेतत् ॥ १२

( अथ सङ्कल्पाधिकरणम् ॥ ४ ॥ )

धात्रादेरप्यपेक्ष्यो ह्युपकरणगणस्सत्यसंकल्पवृत्ते-
र्मुक्तस्याप्येवमेवास्त्विति यदि वितथं तद्विकल्पासहत्वात् ।
इष्टा द्रव्याद्यपेक्षा सुकृततदितरापेक्षणं तत्र दुस्स्थं
न स्यादिच्छाविघातस्त्वनुपधिकतया देववाञ्छैकरस्यात् ॥ १३
विश्वस्यैतस्य जन्मस्थितिलयरचना विश्वकर्तुर्यथा स्या-
दिच्छासन्तानभेदान्नियतिरिह तथा नित्यमुक्तक्रियाणाम् ।
तस्यानुच्छेदवृत्त्या प्रतिकलभिदुरास्ताश्च तादृक्प्रवाहा-
स्तद्बुद्धेरापरोक्ष्यं त्वनिशमभिदुरं वर्तते ब्रह्मधीवत् ॥ १४

प्रत्यूहार्हाः प्रदेशप्रभृतिसुकृतिनस्सत्यसंकल्पभावे
मर्त्यारम्भस्पृहादौ तदितरविविधप्राणिसृष्ट्यादिदृष्टेः ।
तेनेच्छासन्ततीनां सफलविफलते पुण्यपापैरमीषां
मुक्तस्योक्ता चिकीर्षा त्वविहतविषया तारतम्यं त्वदोषः ॥ १५
सूत्रे मुक्तोप्यनन्याधिपतिरभिहितस्तेन कस्तस्य शेषी
श्रुत्यैवोक्तस्स्वराडित्यपि विहतिरतः प्राक्प्रतिष्ठार्पितानाम् ।
मैवं नाथेतरान्यत्यघविहित इह क्षिप्यते शेषभावो
विश्वस्यात्मेश्वरो यः पतिरिति पठितस्तत्पतित्वं त्वबाध्यम् ॥ १६

( अथाभावाधिकरणम् ॥ ५ ॥ )

मुक्तः प्रोक्तोऽशरीरः क्वचिदथ बहुधा संभवः क्वाप्यधीतो
गानक्रीडादि चोक्तन्तदनुगुणमतद्वन्द्वमार्षं निरस्यन् ।
स्वच्छन्दस्योभयन्तत् क्षममिति वदति स्वम्मतं सूत्रकार-

स्स्याच्चाकर्मोद्भवन्तन्निखिलमपि परब्रह्मवत्तत्समस्य ॥ १७
मोक्षे पुण्याद्यभावोत्तदुपधिकवपुर्वर्जितत्वं न दूष्यं
तस्मिन्दुःखार्हदेहत्याजि च शुभवपुस्सत्त्वपक्षोऽप्यबाध्यः ।
इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्या-
न्नैवं स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः ॥ १८

नानादेहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंस-
स्तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम् ।
नैतद्धीव्याप्तिसिद्धेर्भवति च जगदावेशवाक्तन्निदाना
सौभर्यादौ प्रकॢप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम् ॥ १९

देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्त-
श्चैतन्यद्वारतश्चेत् सकलमपि तदा धारयेद्व्याप्तबोधः ।
मैवम्मुक्तस्य शक्तिर्नियमितविषया त्विच्छया सर्वशक्तेः
प्राक्तादृग्योगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेक्ष्यः ॥ २०

शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिस्स्वैः
पुंसोऽनंशापि बुद्धिर्बहुविधविकृतिस्स्वीकृतैवं स चास्तु ।
वालाग्रेत्यादिवाक्यात्तदयमणुरपि स्यादनन्तोऽपि मुक्तौ
न स्याज्जैनादिभङ्गे परिहृतविकृतेरैकरूप्यानपायात् ॥ २१

जीवस्यैकैकशो हि त्यजनत उदितो वृक्षशाखासु शोष-
स्तस्मादद्वारकं स्यादपगतवरणे मुख्यमानन्त्यमस्मिन् ।
मैवं शाखासु भोगाश्रयनियतिकरोपाधिनाशः प्रहाणं
क्षेत्रादिन्यायतोऽसात्रभिमतिविरहात् स्यादधीतो जहातिः ॥ २२

एकोऽनेकः परस्मात् पृथगपृथगपि स्वस्वरूपेण मुक्त-
स्स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकक्षीबवद्ये भ्रमन्ति ।
तेऽन्वीक्ष्य स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यं

जैनावष्टम्भदृप्यन्मतिकलहमुचस्सत्पथं संश्रयन्तु ॥ २३

सर्वं संकल्पमात्राल्लभत इति समाम्नायते सूत्रितं च
स्वेच्छातो देहयोगाद्यनियतिकथनं स्यात्ततः पिष्टपेषः ।
तन्नान्योन्योपरुद्धश्रुतिगतिनियतिः कामतोऽनेकदेह-
स्वीकारप्रक्रियेत्याद्यनियतिकथने सूत्रकाराभिसन्धेः ॥ २४

( अथ जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥ )

यद्यप्युक्तो विमुक्तः परतनुरपृथक्सिद्ध इत्यत्र पूर्वं
व्यापारांशे तथापि श्रुतमिह परमं साम्यमक्षोभणीयम् ।
संकल्पादेव सर्वोत्थितिरिति हि ततस्स्यादिति प्रत्यवस्थां
कृन्तत्यन्त्येऽधिकारे कृतिमदितरयोस्स्थापयन् भोगसाम्यम् ॥२५

सायुज्यं भोगसाम्यं समगणि निपुणैश्शब्दशक्त्याद्यबाधा-
त्तच्च व्यापारसाम्ये त्वसति न घटते स्वक्रियास्वादहानेः ।
तस्मान्मुक्तस्य सृष्टिप्रभृतिरपि जगद्व्यापृतिर्ब्रह्मतुल्या
मैवं तल्लक्षणं सा कथमनुगमतस्तस्य चान्यस्य च स्यात् ॥ २६

कथ्यन्ते सृष्टिवाक्यैः क्वचिदपि न जगत्कारणत्वेन मुक्ताः
प्राधीतः कामचारो भवतु न जगदारम्भकत्वं ततस्स्यात् ।
सर्वाकारोपभोग्येश्वरविषयधियः साम्यतो भोगसाम्यं
युज्येतानन्दवल्ल्यामगणि च विभुनानन्दमात्रे सतत्त्वम् ॥ २७

निष्कामश्रोत्रियस्याप्यतिदिशति सुखं मानुषानन्दतुल्यं
साऽऽनन्दान्वक्तुकामा शतगुणमधिकानाविरिञ्चं क्रमेण ।
तत्तद्भोगात्त्वदिष्टं कथमिदमवरं कष्टमिष्टं हि मुक्ते
सत्यं तत् स्यान्मुकुन्दप्रियजनसदृशे ह्येकदेशानुवादः ॥ २८

आनन्दानन्त्यमाह श्रुतिरिह हि यतो वाच इत्यादिका स्या-
द्विश्रान्तिः श्रान्तिमात्रादिति च निगदितं यामुनाचार्यवर्यैः ।

नह्यानन्दो मितस्स्यादिधिशतवचनेऽप्यस्य यष्ट्या नभोव-
च्चोक्तं भूभृदण्वोरुदधिपतितयोर्मज्जने को विशेषः ॥ २९

विश्वम्मुक्तस्य देहो न खलु तदपृथक्सिद्ध्यभावोपलम्भा-
न्नोपादानं ततोऽसौ कथयितुमुचितस्सर्वशक्तित्वहानेः ।
नात्माशक्यं चिकीर्षेत्तदितरविषये निर्विघाता तदिच्छा
व्यापारे भिद्यमानेऽप्यविषमरसता दृश्यते क्वापि लोके ॥ ३०

तत्तत्सेवाविशेषस्थिरपरिणमितस्सार्वभौमप्रसाद-
स्सूते भृत्यस्य साम्यं स्वयमनभिमतस्वामिचिह्नैकवर्जम् ।
एवं देवं दयालुं शरणमुपगतैर्लभ्यतेऽनन्यलभ्या
निर्धूतावृत्तिशङ्का निरुपधिकरसा सव्यवस्था त्ववस्था ॥ ३१

अत्राहुस्सूत्रमन्त्यं पृथगधिकरणं केचिदाञ्जस्यलाभा-
दस्त्यावर्ते निषेध्ये त्विममिति च पदं तेन शङ्कोत्थितेति ।
भाष्यादौ तन्न दृष्टं भवति च सुगमं पूर्वशेषत्वमस्य
स्यादावृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का ॥ ३२

सर्गाद्यावर्तलीलारससहचरिते दण्डरासे नियुक्तं
जीवं देवो विमुच्य क्रमत इह सयुग्भावधन्यं भुनक्ति ।
कर्मात्यन्तोपशान्तेरिह न च पुनरावर्तयत्येनमित्य-
प्याम्नाते कर्ममूलाक्षयफलकथनाद्युत्थशङ्कोपशान्तिः ॥ ३३

स्वाविर्भावोऽपवर्गे निरुपधिनियतस्वप्रकार्यन्तदृष्टि-
श्चिद्रूपस्यैव तद्वच्छ्रुतिमकुटमितैः स्वप्रकारैस्सहेक्षा ।
सङ्कल्पादेव सिद्धिस्तनुषु च नियमोन्मुक्तता ब्रह्मसाम्य-
प्राप्तौ तल्लक्षणांशोज्झनमिति चरमाध्यायतुर्याङ्घ्रिसारः ॥ ३४

ध्यानादिं तत्प्रभावं करणभृत इतो देहकाराकुटीरा-
न्निष्क्रान्तिं मार्गनाड्या गतिमपि सुपथा स्वप्रकाशं च साध्यम् ।

इच्छातस्स्वेष्टसृष्टिं परममपि परब्रह्मणा भोगमात्रे
साम्यं मायामतस्थः कथमिव घटयेदन्तिमाध्यायसाध्यम् ॥ ३५

मानामानप्रभेदप्रभृतिविभजनादादिमे कर्मभागे
नाना वा देवतेत्याद्यनुपरिपठनान्मध्यमे देवतांशे ।
भागेऽस्मिन् भेदधर्मप्रभृतिकथनतस्सौगतादेश्च भङ्गात्
मीमांसायां त्रिकाण्ड्यां क्वचिदपि न मृषावादगन्धावकाशः॥३६

त्रय्यन्तोदन्वदन्तस्सृतिरियमुदिता देशिकैः कर्णधारैः
मुक्त्यर्थज्ञानपारं गमयति विशदं त्वन्यदीक्ष्यं विमुक्तौ ।
कर्तव्ये कल्पकारैः क्वचिदभिदधिरे कृत्यसन्देहभेदा-
स्तत्त्वेऽप्येवं क्वचित् स्यात् तदपि न वितथः स्वोपयुक्तांशबोधः॥

श्रुत्यन्तैकान्ततर्कक्रमगरिमगतौ तूलवच्छैलवर्ग-
स्तत्सिद्धब्रह्मबोधद्युमणिरुचितमस्स्तोमकल्पोऽन्यजल्पः ।
मोक्षोपायैकराज्ये तदितरविधयः किङ्करत्वं भजन्ते
मुक्तानन्दामृतैकोदधिपृषतकणस्पर्धिनोऽन्ये पुमर्थाः ॥ ३८

पारावर्यं विविच्य प्रथममवितथैरागमैस्तत्त्ववर्गे
संसारे तीव्रभीतिः परसमधिगमे तीव्रनिष्पन्नरागः ।
कश्चिद्विद्याविशेषं सपरिकरमधिष्ठाय शान्तान्तराय-
स्संपद्य ब्रह्म भुङ्क्ते निरुपधिकमनावृत्तिरित्थं श्रुतेर्थः ॥ ३९

सासौ सासूयतत्तत्कुमतिमतसमुन्मूलनी मूलनीति-
श्रेणी निश्श्रेणिकल्पा त्रियुगपथरथारोहसूतं सुवीत ।
सन्तस्सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं
सन्तोषं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः ॥ ४०

षट्पञ्चाशच्छतं चेत्यधिकरगणैर्व्यक्तसीमाविभागे
काण्डेऽ[illegible] क्षेपकन्यैः किमन्यैः ।

पश्यन्तो विश्वमेतत् त्रिगुणगुणनिकायान्वितस्वान्तनिघ्नं
नाथे नस्साक्षिभूते न वयमिह मुधा कुर्महे नर्मलीलाम् ॥ ४१

विश्वं द्रव्यादिभेदाद्विशदमभिहितं तत्त्वमुक्ताकलापे
व्यूढं शारीकस्य त्विह दृढघटितं रूपमापादचूडम् ।
तस्मादस्मच्छ्रुताब्धेरमृतमिव समुद्भ्रान्तमश्रान्तबद्ध-
श्रद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥ ४२

इत्थं शारीरकोक्ते पथि समुपनतास्स्रग्धराश्श्रद्दधानं
पारे मायापयोधेः प्रहितमभिमुखैः सूरिभिश्शुद्धभावैः ।
ब्रह्मालङ्कारकल्पैर्बहुभिरुपनिषत्सूत्रतात्पर्यशिल्पै-
र्देवार्हत्वाय दिव्याप्सरस इव परिष्कृत्य सम्भावयन्ति ॥ ४३

प्रज्ञाधम्मिल्लमल्लीपरिमलमिलितप्राज्ञसेवासमुद्य-
च्छ्रद्धालोकोज्ज्वलम्मां श्रुतिपरिषदुपस्कारसौभाग्यवद्भिः ।
पद्यैरेतैस्स्वहृद्यैः प्रणवमहिमवत्पाश्वजन्यक्रमेण
स्वाध्मातं रङ्गनाथः स्वयमिति मुखरीकृत्य सम्मोदते स्म ॥ ४४

पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतस्सारभूतं
निर्मथ्यादत्त सूत्रैरवितथनिगमाचार्यनामा मुनीन्द्रः ।
यत्तन्निष्कृष्टमित्थं यतिपतिहृदयारूढमारूढताक्ष्यं-
स्तद्भक्ता वाजिवक्त्रः सह मम गुरुभिर्वादिहंसाम्बुवाहैः ॥ ४५

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

श्रीमतेनिगमान्तमहागुरवे नमः ॥